# पालिजातकावलिः



काशीस्थहिन्दूविश्वविद्यालयीय-संस्कृतविभागाध्यक्षेण, साहित्यो-
पाध्यायपदवीभृता, एम० ए० इत्युपाधिधारिणा,

**श्रीवटुकनाथशर्म्मविरचितया**

संस्कृतच्छाययाऽलङ्कृता

तेनैव निर्मितैर्भाषानुवाद-पालिव्याकरणसंक्षेप-पालिपाठ-
पदोच्चयादिभिः समुद्भासिता

प्रकाशकः

**मास्टर खेलाड़ीलाल संकटाप्रसाद**

संस्कृत पुस्तकालय, कचौड़ीगली,

वाराणसी–१

# किमपि प्रास्ताविकम्

प्रवर्तन्तेऽवतारास्ते यत्कारङ्कुलितो दश ।
सा मे मतिबलं दद्यादपि दाशबलात्मजे ॥

ग्रन्थानधीत्य विविधानधि बुद्धवाचं
वादांश्च चेतसि विचार्य विभिन्नभावान् ।
विद्याधिवेद्यविजयं मितया गिरैव
प्रस्ताविकं किमपि लेखितुमद्य यत्नः ॥

अस्यां प्रस्तुतपुस्तिकायां जातककथाभ्यो विंशतिः कथा समादाय विदुषां पुरः सादरं प्रास्यन्ते । एतास्ता जातककथाः 'पालि' इति प्रसिद्धायां भाषायां समुपनिबद्धाः समुपलभ्यन्ते । संप्रति सर्वेभ्यः पूर्वमयमेव प्रश्नः समुत्तिष्ठति केयं पाली नाम भाषेति । प्रश्नश्चायं कुतूहलविशेषेण संवलितः । प्रायशो जगतीसंने-ऽस्मिंस्तेऽपि व्यक्तमेवेदं दरीदृश्यते यद्भाषाभिधानानि जनानां जनपदानां वा नामभ्यः प्रवर्तन्ते । नेदं खलु भाषाविज्ञानविदामेव वेद्यो विषयः । वयमपि द्रष्टुं पारयामो यद् 'वङ्गानां भाषा 'वङ्गला' इत्युच्यते । गुर्जराणां 'गुजराती', महाराष्ट्राणां 'मराठी', काश्मीराणां 'काश्मीरी' इत्यादयो व्यपदेशास्तमेव सिद्धान्तं स्थिरीकुर्वन्ति । नैतन्नूत्न एव भवति भाषानामोद्देशः समयः। पुराऽपि शूरसेनानां भाषा 'शौरसेनी' इति, मगधानां 'मागधी' इति महाराष्ट्राणां 'महाराष्ट्री' इति नामभिरेव व्यवाह्रियन्त । संप्रत्यपि तास्तथैवोद्दिश्यन्ते । तत् पालीति नामधे केनाऽपि देशविशेषेण जनपदविशेषेण वा दुरनुसन्धेयसम्बन्धत्वात् चित्रमिव किमपि चित्ते प्रतिभाति ।

अत्र सन्ति विविधा विप्रतिपत्तयो विदुषां भाषाविज्ञानजुषाम् । तत्र काश्चित् कपोलकल्पनाऽऽकुलितयथार्थभावा भारतीयानां मतिपथं यथातथमारोढुं नैव समर्थाः । तदन्या अपि यद्यपि मान्यानां मतिमतां मस्तिष्कपरिष्कारवत्यः

समुत्कर्षन्ति जनानां मानसम्, तथाऽपि नैवाऽस्माकं हृदये परं प्रत्ययं समुत्पादयन्ति। तदत्र तास्ताः कल्पनानुकूलितकलेवरा वाचोयुक्तीः परित्यज्य विश्वासार्हयैव सारण्या पालिशब्दार्थविचारोऽत्र तावत् प्रस्तूयते।

अथ भगवान् बुद्धो यदा चिरसमाधिसिद्धिं सम्यग्ज्ञानरूपां 'बोधि' लब्ध्वा चिरानुभूतां 'बोधिसत्त्व' इति पदवीमुल्लङ्घ्य बुद्धतामध्यरुक्षत्, तदाऽस्य परमकारुणिकतया लोकं शोकसन्तानादुद्धर्तुं बलवती मतिः प्रादुरभूत। समाधिषु स्वानुभूतं तत्त्वं साधु समाधाय तदेव जनेष्वपि प्रख्यापयितुं स शास्ता भगवानियेष। काश्यामेव किल तस्योपदेशरूपं प्रथमं प्रवचनं जनैरश्रूयत। प्राकृतैरपि जनैर्मदीयोपदेशामृतं यथेच्छं निपीयतामिति सकरुणया मत्या व्यवसायिताशयो लौकिक्यैव गिरा स समुपदिदेश महापुरुषः। का नाम सा लौकिकी वाणी या भगवता तदर्थं संभाविता? असंशयमियमासीत् मगधेषु तदानीमुपयुज्यमाना काचिद् भाषा। मागधो हि बभूव भगवान् बुद्धः[1]। तस्य मगधदेशोत्पत्तिस्तु सर्वतो विश्रुतैवास्ते। सा भाषाऽपि मागधीत्येवोच्यताम्। किन्त्वत्रावधेयमिदम्। नैषा प्राकृतव्याकरणेषु प्रसिद्धा मागधी भवितुमर्हति[2]। इयमतिप्राचीना साऽतीवार्वाचीन। उभयविनिगमनाय विद्वद्भिरेका 'बौद्धमागधी' इत्युच्यते। तदितरा 'प्राकृतमागधी' इति नाम्नाऽभिधीयते। इयं पुनर्बौद्धमागधी जैनानामागमभाषातः स्फुटमेव विभिद्यते। सा 'अर्द्ध[3] मागधी' इति प्रसिद्धाभिधानं भजते। भगवान् महावीरो मागधोऽपिभूत्वा शुद्धां मागधीं नैवोपायुङ्क्तेति 'अर्द्धमागधी' इति शब्देनैव स्फुटं प्रतीयते। इयं कथाऽप्यन्यया भाषया मिश्रिता मागधीति मन्यन्ते बहवो विद्वांसः। कल्पयन्ति च ते

---

तदुक्तं सामनवंसे—

१—"सो च भगवा मागधो मगधे भवत्ता, सा च भासा मागधी" इत्यादि।
विस्तरार्थं विलोक्यताम् पाली-प्रकाशः, पृ० १३

२—तदुभयभेदावधारणाय विलोक्यताम्—पाली-प्रकाशः पृ० १४

३—अर्द्धमागधीविशेषावबोधाय दृश्यताम्—
Ardhamagadhi Reader by Banarasi Das Jain,
Woolner : Introduction to Prakrit.

किन्तु पदे पदे प्रमादस्थानानि शङ्कनीयानीत्युपलभ्य तदुपजीव्यः विद्वद्वर-'एण्डर्सन' सङ्गृहीतः 'पालि रीडर' इत्याख्योऽपि ग्रन्थः सन्निहितो व्यधायि। तत्राऽपि क्वचित् क्वचित् स्खलितमिव किमपि साशङ्कमुत्पश्यता मया 'फौसबोल' इति सुगृहीतनामधेयैः पालिमहापण्डितैः प्रकाशितः पञ्चभागात्मकः 'अत्थवण्णना' इत्याख्यया टीकया सहितः पालिजातकनिकर एव समवलम्बितः। अहो अध्यवसायः फौसबोलपण्डितस्य! तत्कृतिः सत्यमेव चमत्करोति चेतः।

अस्या जातकाल्याः पाठादिनिर्णये तथा चान्येष्वपि विषयेषु येषां पुस्तकलेखादिभ्यः साहाय्यमासादितं तेषामुपकारं सप्रश्रयं कृतज्ञान्ततःकरणेन पुनः पुनः स्मरामि। यथास्थानं प्रस्तावनायां च यथाशक्ति पुनरपि तेषामुपकारस्मरणं नामग्राहं यतिष्ये। यदीयसाहाय्येनेदं कथं सम्भावित-पदमुपनीतं तमहं चिरञ्जीविनं श्रीरामशङ्करमिश्रं कैः शब्दैरभिनन्दामि? अयं वत्सोऽचिरादेव विद्याप्रसादमासादयेदित्येव मे श्रीमातुश्चरणयोः सप्रश्रयोऽनुनयः। श्रीमतो मन्नालालस्याप्युपकृतिर्नैव विस्मर्तुमर्हा। श्रीविश्वनाथोऽस्य सर्वथा कल्याणं कुर्यादित्येव मे हृदयगताऽऽशीः।

येषामुपकृतिः शब्दव्यापारेण प्रकाशयितुं नैव कदापि पार्यते तेषां श्रीगुरुचरणानां ससमादरं सप्रश्रयं स्मरणमेवास्मादृशां शरणम्। यन्मादृशोऽप्यकिञ्चनश्चितिचन्द्रिकाकणान् कथमपि विचेतुमलं स्यात् तत्र श्रीगुरुचरणानामनुग्रह एव सर्वप्रधानं कारणम्।

यत् प्राकृतेष्वपि मतिर्विपर्ययेषु मोहं याता न मेऽपि वटुकस्य न तत्र चित्रम्।<br>
जागर्ति मानसविपापहरोऽनिशं मे, श्री भालचन्द्रचरणाम्बुजसंप्रसादः॥<br>
यो वस्तुतोऽस्ति विबुधोऽत्र महामहोपाध्यायोऽभियुक्तशरणीकृतपादपद्मः।<br>
सोऽयं सदागमसुधार्णवकर्णधारः, श्रीलक्ष्मणोऽस्तु हृदये मम पूज्य पूज्यः॥

दीपावली, १९९७ { विदुषां वशंवदो<br>
बटुकनाथशर्मा

# अनुक्रमणिका

# प्राक्कथनम्

स्मृताऽपि मानसोल्लासं तनुते सहसैव या ।
सा सदालोकदा काचित् स्याच्चिदानन्दचन्द्रिका ॥

इयमद्य पालिजातकावलिर्यथामति सम्पाद्य नीयते नयनगोचरतां विशद शेमुषीजुषां विदुषाम् । इदमनु किमपि परिचाययितुमिव निवेदयेयमिति मतिं विधाय प्रवृत्तोऽहमिदं प्राक्कथनं लेखितुम् । यावदन्यद् गदितुं समुपक्रमे तावदादौ कथयामि कथमयमहं सम्पादनभारममुमूरीकर्तुमपारयम् । एतदर्थं प्रार्थितोऽभूवं मदन्यतमेन च्छात्रेण श्रीमताऽऽयुष्मता मन्नालालेन । कारणैरनेकैः समुदितैः संप्रति मे दुष्करमेव भवति स्वल्पमपि किमपि कार्यजातम् । अवश्यकर्तव्यतयाऽऽपतितेषु बहुविधाध्ययनाध्यापनादिकार्येषु व्यासक्तचित्तत्वात् तन्मे दुष्करतरत्वमेवोपपद्यते । तदस्मिन्नेवमुपस्थिते दुःस्थे व्यतिकरे, सत्यमेवान्वभावि किमपि विचित्रं दोलाधिरोहणसुखं ममान्तःकरणेन । यदि नोरीकरोमि तदर्थितं, विहन्यते प्रियशिष्यप्रणयः । अथाङ्गीकरोमि चेत्, समासाद्यते महानायासः । किमत्र कर्तुं युक्तं स्यादिति चेतसि विचिन्तयता मया प्रसङ्गादुक्तोऽयं विषयो मदन्तेवासिने चिरञ्जीविने श्रीरामशङ्करमिश्राय । परमसंमदमगमन्मदीयं हृदयं यदाऽनेन सत्यपि निजे महत्यध्ययनीये विषये प्रतिश्रुतं मह्यमावश्यकं साहाय्यकम् । इतः परमपि दैवेनानुकूल्यमुल्लासितम् । असकृदनुभूतचरमेवेदं यदतीव चक्षुरुत्क्षोभवति सूक्ष्माक्षरसंशोधनकार्यम् । तदिदं ममाङ्गुलिनिदर्शनेनेव निदेशेन यथाशक्ति समनुष्ठितं श्रीमन्नालालेन । इत्थं नोविदा यद् भगवता महावीरेण प्रभूतश्रोतॄणां सुखावबोधाय स्वयमेव तादृशीं

भाषा विनियुक्ता[1]। यथा तथा वा भवतु, इयं बौधमागधी जैनानामर्द्ध-मागधीतो विभिन्नेत्यर्थोऽनेकैः प्रमाणैः साधु समर्थ्यते[2]। इयमेव बौद्धमागधी पश्चात् 'पाली' इति प्रथां प्राप्तवतीति निर्विवादप्रायम्[3]।

अधुना 'पाली' इति शब्दस्य कोऽर्थ इत्येव विचारयितुं प्रवर्तेमहि। पालि-शब्दो यथा संस्कृते तथैव बौद्धमागध्यामपि 'पङ्क्ति' इत्यर्थे प्रयुक्तो बहुशोऽवलोक्यते। तथा चोक्तमभिधानप्पदीपिकायाम्—"पन्ति वीथ्यावलिस्सेनि पालि रेखा च राजि च।" सांप्रतमपि पण्डितमण्डलीषु संस्कृतच्छात्रसंघेषु च विविधार्नीदृशानि वाक्यानि श्रवणगोचरतां नीयन्ते। 'तात्पर्यार्थस्तु गृहीतः, किन्तु पङ्क्तिर्न चाऽपि साधु स्फुटीभूता'; 'यदि परीक्षासु साफल्यं पूर्णमपेक्षसे, तर्हि पङ्क्तिषु विशेषेणावधानं देहि'; 'यथोच्यते श्रीमद्भिस्तथैवास्तां तावद्, किन्तु कथमेतत्पङ्क्तितोऽवसीयत इत्येव न खलु सम्प्रधारयामि'। नैवाधुनैवेदृशः प्रयोगोऽस्मास्वववतीर्णः, पूर्वाचार्याणामपि लेखेषु सोऽवलोक्यत एव। यथा तैत्तिरीयारण्यकभाष्ये भट्टभास्करः 'उमन्तु इति आस्तारपङ्क्तिः प्रणवोपासने विनियुज्यते।" यथा च कौटिलीयार्थशास्त्रस्योपोद्घाते "कौटिलीयार्थशास्त्रपङ्क्तिरुदाहृता दृश्यते।"

यथा पङ्क्तिशब्दः संस्कृते 'मूलग्रन्थ' इत्यर्थे प्रयुक्तो दरीदृश्यते तथैव तस्मिन्नेवार्थे पालिशब्दो बौद्धमागध्यां प्रयुक्तेऽवलोक्यते। यथा महावंसे (महावंशे) बुद्धघोषकृतामत्थकथामुद्दिश्य प्रोक्तम् "थेरियाचरियासब्बे पालिं विषयतमग्गहुं (स्थविर) आचार्याः सर्वे पालिमिव तामग्रहीषुः यथा च सासनवंसे (शासनवंशे)— 'जम्बूद्वीपे पन पालिमत्तं येव अत्थि अट्ठकथा पन नत्थि (जम्बूद्वीपे पुनः पालिमात्रमेवास्ति, अर्थकथा पुनर्नास्ति) अलमतिविस्तरेण एतावतैव मतिमतामिदं व्यक्तं भविष्यति यत् पालिशब्दः प्रथमं मूलग्रन्थार्थे प्रयुक्तो बभूव। तदनु मूल-

1—Bhandarkar, R G.—Wilson Philological Lectures.

२—अवलोक्यताम्—पालीप्रकाशः, पृ० १६
Geiger, W-Pali Sprache and Literatur.

३—प्राकृतमागधीकृते विलोक्यताम्—
Banerji,-Sastri, A—Evolution to Magdhi.

ग्रन्थसम्बद्धा ये चान्ये ग्रन्थास्तानपि बोधयितुमयं पालिशब्दः सर्वथाऽलमभूत्। मूलग्रन्थबौद्धानामेतेषां त्रिपिटकः। तत्सम्बद्धा ग्रन्थास्तु तदर्थकथास्तदन्ये च साक्षात् परम्परया वा तदनु गणतामावहन्तो ग्रन्थाः। एते सर्वे पालिशब्दवाच्या बभूवुः। ये पुनस्त्रिपिटकतश्च तदनुबद्धग्रन्थेभ्यश्च विभिन्ना बभूवुस्ते नैव समयेऽस्मिन् पालिशब्दवाच्यतां कदापि प्रापुः। तथा चोक्तं सासनवंसे ( शासनवंशे)— "एते ( महावंश ) प्रभृति पालि मुत्तक वसेन वुत्ता गन्धातरानि वुच्चति।" —एते ( महावंशप्रभृतयः ) पालिमुक्तकवशेन वियुक्ता ग्रन्थान्तराणीत्युच्यन्ते।

एवं पालिशब्दा 'मूलग्रन्थं' द्योतयति स्मेति स्पष्टमेव। कालक्रमेणाऽयं पालिशब्दो यस्यां मूलग्रन्था लिखितास्तामेव भाषां बोधयितुं प्रवृत्तोऽभूत्। पालिर्मूलग्रन्थस्तस्य भाषा पालिभाषा। भाषापदवियुक्तेऽपि पालिशब्दो भाषाया वाचको बभूव। तथा चोक्तं सासनवंसे ( शासनवंशे )—"इच्चेवं पालिभासाय परियत्ति परियत्तिता" ( इत्येव पालिभाषायां परियत्ति परियत्तिता। )

यदा प्रवृत्तः पालिशब्दो भाषाविशेषं द्योतयितुं तदाऽस्य शनैः सर्वतनोऽर्थोऽपि ततः पर्यहीयत। यत् किञ्चिदपि पालिभाषाया लिखितमभूत् तत् सर्वं पालिपदवाच्यतामगच्छत्। अथ कस्मिन्नवसरे प्रवृत्तिरियंपालिशब्दस्यार्थान्तरे प्रयोक्तुं प्रादरभूत इति प्रश्नो दुरुत्तर एव। चाइल्डर्स[1] महोदयस्य मतेन प्रथमं द्वितीयं वा ख्रिष्टाब्दशतकमेतस्य समयः। किन्तु तदुदाहरणानि बुद्धघोषात् पश्चादेव लिखितेभ्यो ग्रन्थेभ्यो बहुशः समुपलभ्यन्ते। बुद्धघोषस्तु[2] पञ्चमशतकेऽभूदिति विदुषां मतम्। अतः सम्भाव्यते तदनन्तरमेव बौद्धाः स्वग्रन्थभाषां पालिशब्देन प्रवक्तुमुपचक्रमिरे।

'पालिशब्दवतन्ति' शब्दोऽपि मूलग्रन्थार्थे बुद्धवचनेषु प्रयुक्तो बहुशो प्राप्यते। उभावपि शब्दौ पङ्क्तिवाचकत्वात् प्रायः सदानार्थाविव। उभावपि तथा प्रयुक्तावपि दृश्यते एव। किन्तु भाषाविशेषवाचकत्वं तु पालिशब्देनैवोपलब्धम् कथमिदमभूदिति सम्प्रति निर्णेतुमशक्यप्रायम्। स्यादत्र वक्तॄणां प्रवृत्तिरेव प्रधानं कारणम्।

---

1—Childers, R. C.—Dictionary of the Pali Language.
2—Winternitz, M.—History of literature, Vol. II.

मूलग्रन्थवाचकः 'पाली' इति शब्दो कुतस्तद्भाषाया वाचकत्वं प्रापित इत्यपि प्रश्नः साधु समाधातुं नैव सम्प्रति सम्प्रतिपन्नियुक्तैरप्यभियुक्तैः कथमपि पारितम्। इदमेवानुमातुं शक्यते यत् परिक्रामति सर्वाक्रमणशीले भगवति काले विस्मृतपदवीमनुगच्छत्सु च बौद्धवचनेषु बौद्धा यथावत् तद्भाषणकार्यविमुखा यथा तदर्थं तथैव तच्छब्देऽपि समवधानं ददन्युः। एवं समप्राधान्यं शब्दार्थयोः समुपसर्पत मानसे बौद्धकोविदानां नैतच्चित्रं यदेक एव वाचकतामभजत तदुभयस्य। यद्वा तद्वा भवतु, कथमपि वा तत् सम्भवतु, इदं तु निर्विवादमिव नः प्रतिभाति यत् पालिशब्दो मूलग्रन्थवाचकतां वहन्नपि तद्भाषावाचकत्वमपि कालक्रमेण प्रापत्।

पूर्वमेव निवेदितं यत् प्राच्याः प्रतीच्याश्चोभे विद्वांसः पालिशब्दनिरुक्तावप्रतिमं प्रतिभानं प्रादर्शयन्। केऽपि पाटलिपुत्र इत्यत्र प्रयुक्तात् पाटलिशब्दात् पालिशब्दो व्युत्पन्न इति मन्यन्ते। तदितरे 'पल्लि' इत्यस्मात् पालिशब्दस्योत्पत्तिमीहन्ते। ततोऽप्यन्ये मगधप्राचीनाभिधानात् 'पलास' इत्यस्मात् वाञ्छन्ति पालिशब्दावतारम्। किमधिकं ब्रूमहे यदा 'पलेष्टाइन' 'पलटिन' इत्यादिभिरपि पदैः पालिशब्दस्य सम्बन्धोऽनुबध्यते। अलमेतैरतिमतिविकल्पितविस्तरैः। पालिवैयाकरणास्तु—'सद्दत्थं पालेतीति पाली' इत्थमवोचुः। भवतु कल्पनाप्रसूतमेव व्याकृतिनिर्गता निरुक्तिरिदम्। किन्तु सर्वमिदमसङ्गतमित्यपि वक्तुं नैव शक्यते[1]।

अलं विवादग्रस्तविषयमुत्थाप्य। इदमेवावधेयम्। पालिशब्दो भाषाविशेषं बोधयति। अस्ति पालिर्नाम भाषा। अस्यामेव भाषायां बौद्धानां मूलधर्मग्रन्था लिखिताः समुपलभ्यन्ते। इयं भाषा जनानां जनपदानां वा नामधेयात् नाभिधानं स्वकीयं प्राप्तवती। पालिशब्दः प्रथमं मूलग्रन्थस्यार्थे प्रयुक्तो बभूव। तदनन्तरं कालक्रमेण मूलग्रन्थस्य भाषामपि द्योतयितुं प्रचक्रमे।

पालिभाषाया अभिधानमुत्पत्तिं च विचार्य संप्रति तस्यां लिखितानां ग्रन्थानां आलोचनं संक्षेपतः समारभेमहि। सांप्रतं द्विविधा हि बौद्धागमाः समुपलभ्यन्ते। तदेके संस्कृतवाण्या समुपनिबद्धास्तदितरे पालिभाषया। पालिभाषया समुद्ग्रथितास्तु ये सन्ति तदागमास्त एव प्राचीनतराः प्रामाणिकतराश्च। ते 'बुद्धवचनानि'

1—Vidyabhusana, S. C.—Pali Grammar.

इति समाद्रियन्ते । कालक्रमेण द्वैविध्यमापतत् प्रधानभावेन बौद्धमतस्य महायानं हीनयानं चेति । बौद्धा अपि द्वैविध्यमभजन् । पालिशासनमनुरुन्धाना दाक्षिणात्या सिंहलब्रह्मादिदेशेषु तावदद्यापि जाग्रत्येव बौद्धाः । चीनमहाचीनप्रभृतिजनपदेषु ये बौद्धा वर्तन्ते तदितरबुद्धानुशासनसम्प्रदायमनुरुध्यन्ते ।

पालिभाषाया लिखिता ग्रन्थाः[1] सम्प्रधारणसौकर्याय भागयोर्द्वयोः स्थापयितुं शक्यन्ते । प्रथमे धर्मग्रन्था भवन्ति, द्वितीये व्याकरणादिशास्त्रीयविषया[2] ग्रन्थाः । धर्मग्रन्थाः 'त्रिपिटक' इत्यभिधीयमानेषु भागेषु विभक्ताः प्राप्यन्ते । एतानि ते भवति ( १ ) विनयपिटकम्, ( २ ) सुत्तपिटकम् ( सूत्रपिटकम् ) ( ३ ) अभिधम्मपिटकम् ( अभिधर्मपिटकम् ) ।

### ( १ ) विनयपिटकम्

अत्र बौद्धसङ्घस्थानां भिक्षूणां समुपयुक्तान्यनुशासनानि साधु समाहितानि । अयं संग्रहो वैक्रमाब्दात् शतकत्रयपूर्वमेव समुपनिबद्धः सन्त्यस्य त्रयो विभागाः—

( १ ) सूक्षविभङ्गः ।
( २ ) खन्दकाः ( स्कन्धकाः ) ।
( ३ ) परिवारपाठः ।

### ( २ ) सूत्रपिटकम्—

भगवतो बुद्धस्य प्रवचनरूपमिदं पिटकम् । वैक्रमाब्दात् सार्द्धशतकद्वयपूर्वमेव प्रादुर्भावमागतमिति विदुषां मतम् । निकायपञ्चकोपपन्नमिदं पिटकम् ।

( १ ) दीघनिकाय ( दीर्घनिकायः ) ।
( २ ) मज्झिमनिकाय ( मध्यमनिकायः ।
( ३ ) संयुक्तनिकाय ( संयुक्तनिकायः ) ।

---

१—विस्तरस्तु ग्रन्थेष्वेतेषु द्रष्टव्यः—

Law, B. C.—History of Pali Literature.
Winternitz, M.—History of Indian Literature, Vol. II.
Hurst, G. L.—Sacretd Literature.

२—अयं विभागः अत्थमालिनीमनुसृत्य दत्तः, गन्धर्वसे तु भिन्न एव दृश्य ते!

( ४ ) अङ्गुत्तरनिकाय ( अङ्गोत्तरनिकायः ) ।

( ५ ) खुद्दकनिकाय ( क्षुद्रकनिकायः ) ।

**अभिधर्मपिटकम्—**

पिटकमिदं किंरूपं किंप्रयोजनं वेत्यत्र विवदन्ते विपश्चितः । तेषां मतान्यालोच्येदमेवावसीयते यदिदं सूत्रपिटकस्य दार्शनिकं प्रतिरूपम् । येऽर्था निकायपञ्चके भगवदुक्ताः प्रवचनरूपेणोपलभ्यन्ते, त एवाऽत्र शास्त्रीयदृशा समवधार्य साधु समाधीयन्ते ।

**अस्यैते विभागाः—**

( १ ) धर्मसङ्गणिः ।
( २ ) विभङ्गः ।
( ३ ) धातुकथा ।
( ४ ) पुग्गलपञ्ञति [ पुद्गलप्रज्ञप्तिः ] ।
( ५ ) कथावत्थु [ कथावस्तु ] ।
( ६ ) यमकम् ।
( ७ ) पट्ठान [ प्रस्थानम् ] ।

नाऽत्र वयं सर्वेष्वेतेषु कमप्याग्रहविशेषं बध्नीमस्तदलमनतिप्रयोजनीयेन विस्तरेण । सूत्रपिटके ये सन्ति पञ्चनिकायास्तेषामन्यतमः क्षुद्रकनिकायः । निकाये सन्ति ग्रन्था अधस्तादुल्लिखिताः ।

( १ ) खुद्दकपाठः [ क्षुद्रकपाठः ] ।
( २ ) धम्मपदम् [ धर्मपदम् ] ।
( ३ ) उदानम् ।
( ४ ) इति वुतकम् [ इतिवृत्तकम् ] ।
( ५ ) सूतनिपात [ सूत्रनिपातः ] ।
( ६ ) विमानवत्थु [ विमानवस्तु ] ।
( ७ ) पेतवत्थु [ प्रेतवस्तु ] ।
( ८ ) थेरगाथा [ स्थविरगाथा ] ।
( ९ ) थेरीगाथा [ स्थविरगाथा ] ।
(१०) जातकानि ।

तदेवं पश्यामो वयं यत् यतोऽस्यां पालिजातकावल्यां विंशतिर्जातककथाः समुद्गृहीतास्तानीमान्येव जातकानि बुद्धवचनेषु खुद्दकनिकाय (क्षुद्रकनिकायः) नाम योऽस्ति सूत्रपिटकस्यान्तिमो विभागस्तस्य दशमेऽङ्गे जातकानि सन्ति समुपनिबद्धानि ।

"जातक" इतिशब्दस्य तावत् कोऽर्थः ? जनधातोर्निष्ठान्तो वा भावे क्त इत्यस्मात् वा शब्दोऽयं निष्पद्यते । अतो जातं भूत कथेति यावत् । अथवा 'जातं' जनन जनिः ।' भगवान् बुद्धो यदा सम्यग्ज्ञानाधिगमात् सम्यक् सम्बुद्धो बभूव स निसर्गत एव जातिस्मरज्ञानमपि लब्धवान् । सोऽविकम्पेन चेतसा सस्मार सर्वं तत् यदन्वबभूव स प्राक्तनेषु जननेषु । यथाकथाप्रसङ्गं स तानि पूर्वजन्मवृत्तानि भिक्षुभ्योऽचकथत् एतान्येव 'जातकानि' इत्युच्यन्ते । प्रत्नतत्वविदामनुसन्धानेनेद प्रतीयते यदिदमभिधानं वैक्रमाब्दात् शतकत्रयपूर्वमेव प्रायः प्रसिद्धिमापेदे । तृतीयसंगीतिनिर्धारितत्रिपिटकानि समादाय महाराजाशोकतनयो महेन्द्रो बौद्धमतप्रचाराय सिंहलद्वीपं (Ceylon) जगामेति सुप्रसिद्धमेव । इदमपि च कर्णगोचरीक्रियते यदासीत् कोऽपि टीका जातकानां 'अत्थकथा' इति प्रसिद्धा । सैव गाथां विहाय सिंहलभाषयाऽनूदिता बभूव । सम्प्रति तदुभे अपि नोपलभ्येते सिंहलटीकामधिष्ठाय 'जातकत्थवण्णना' इति प्रसिद्धा पालीटीका निर्मिता बभूव । इयमेव जातकैः समेता फोसबोलपण्डितेन पञ्चसु भागेसु प्रकाश्यं नीता । अस्याः टीकाया भूमिका सुविस्तीर्णा 'निदानकथा[२]' इति नाम्ना सुविख्याता । जातकानामुत्पत्त्यादिविषये वर्ततेऽत्र महान् विचारसंचारः । कथं भगवान् बुद्ध एताः कथाः कथितवान्, कीदृशेषु प्रसंगेषु, कीदृशेष्ववरेषु वा इत्यादिकं तत्रातिविस्तरेण प्रदत्तम् ।

---

१—अधिकाववोधाय डा० विण्टरनिट्ज़ (Winternitz) महोदयस्य 'जातक' इति लेखः 'Encyclopaedia of Religion & Ethics' इति प्रसिद्धे विश्वकोषेऽवलोकनीयः श्रीमता ईशानचन्द्रघोषेणा नूदितानां जातकाना प्रस्तावताऽपि विलोकनार्हा ।

२–Rhys David : Birth Stories इत्येतस्य ग्रन्थस्य भूमिकावलोकनीया

एतस्मात् विविधवृत्तविस्तारात् अस्माकं प्रयोजनीयमपि बहु विषयं वयं लभामहे । एतानि जातकानि सार्द्धपञ्चशतसंख्याकानि द्वाविंशतिभागेषु विभक्तानि । पालिनिकायेषु वर्त्तन्ते स्म बह्व्यः गाथाः । ता एव समाश्रित्य एताः कथा उदाहरणरूपेणासां प्रादुर्बभूवुः । तदेषां गाथानां रूपवृद्ध्या द्वाविंशतिर्निपाताः संभवन्ति । एत एव विभागा जातकानाम् । जातकस्य वर्णनाकारो जातकं विषयविभागमनुसृत्य पञ्चसु विभागेषु विभक्तवान् । तद्यथा—प्रथमस्तावत् पच्चुप्पन्नवत्थु । एतस्मिन् विभागे भगवतो बुद्धस्यावस्थानकाले वर्तमानानां प्रसङ्गानां व्यासङ्गेन प्रवृत्तानां कथांशानां निर्देशो वर्तते । द्वितीयो विभागः—अतीतवत्थु । एतस्मिन् विभागे जातकस्य प्रधानकथासमुद्गमः । बोधिसत्त्वावस्थायां भगवता बुद्धेनानुभूता वृत्तविशेषा अत्र सङ्गृहीता भवन्ति । तृतीयोंऽशस्तु गाथा भवति । चतुर्थोंऽशो गाथानां व्याख्यानरूपो 'वेय्याकरण' इत्युच्यते । पञ्चमोंऽशः समोधान इत्युच्यते । अत्र भगवता पूर्वेषां वृत्तानां वर्तमानैर्वृत्तैः समन्वयनं क्रियते ।

जातकानां महत्त्वं बहुविधं वरीवर्ति । बौद्धानां कृते तु महत्त्वमेतत् परमतीव वद्याहि । अद्यापि सिंहलब्रह्मादिदेशेषु कथा एतेषां महान्त इव श्रूयन्ते समस्ताः रात्रिर्यावत् उपासकोपासिकाभिः । ये नैव सन्ति बौद्धधर्मावलम्बिनस्तेषामपि मतमनुसृत्य वर्तते जातकानां नाल्पं महत्त्वम् । प्रथमं तावदिदमेव यदत्र प्राचीनतरा मागधी—प्राकृतभाषा लभ्यते । व्यक्तमेवेदं यावतं यद् जातकस्य बहवोंऽशा अर्वाचीनतरेषु लभ्यमानाभ्यो भाषाभ्यः प्राचीनतरां भाषासम्पदं समानयन्ति । न खल्वेतावदेव महत्त्वं जातकानाम् । कथाविनोदिनामपि कौतुकवहान्येतानि जातकानि । बह्व्यः कथा अत्रोपलभ्यन्ते याः सर्वदेशेषु सर्वभाषासाहित्येषु च प्रायः पदं केनचिद् रूपेण प्रापन् । अत्र सामाजिकावस्थाया चित्रणमपि बहुविधं बहुरूपेण प्राप्यते । ऐतिहासिकं तथ्यातथ्यमनुसर्तॄणां विदुषामस्ति महद् वादानामवकाशः, किन्तु वर्तत एवात्र प्रभूता सामग्री तथाविधा या सर्वथा विश्वासार्हेति मते नैव विद्यते कस्यचिदपि विमतिः । भारतीयस्थापत्यानुशीलने मूर्तिनिर्माणकौशले च ये सम्यगैतिहासिकं याथातथ्यमनुसर्तुं यतन्ते तेषां तु सर्वाणीमानि महोपकारीणि ।

यद्यपि बौद्धधर्मग्रन्थाः संस्कृते पालि भाषायां च समुपनिबद्धाः सन्तिः, तथापि पालिभाषामविज्ञाय यथातथं भगवतो बुद्धस्य प्रादुर्भावप्रभावं नैव परिमातुं पार्यते। तार्किकमतिचमत्कारैश्चमत्कुर्वन्तु मानसान्यस्माकं बौद्धसंस्कृतग्रन्थाः, किन्तु यो विनय इत्युच्यते बौद्धैस्तमधिकृत्य विशुद्धं विज्ञानं पालिग्रन्थेष्वेवोपलभ्यते। बहवः सन्ति पालिग्रन्था दुर्बोधा दुर्लभाश्च। तान् सम्प्रति तज्जन्मभूमौ न कोऽपि प्रायः शक्नोति यथावदनुशीलयितुमध्यापयितुं वा। तेषु जातकान्येव सुलभावबोधानि वर्तन्ते। अत एव पालिग्रन्थार्थजिज्ञासुः प्रायः एतैरेव स्वाध्ययनं प्रारभते। इत्थं पश्यतां विपश्चितां नैवेदमपरोक्षं भविष्यति यदस्ति जातकेषु किमपि विचित्रं महत्त्वम्। एतेषामध्ययनेन भविष्यति महानुपकार इत्यत्र नाऽस्ति सन्देहलेशः। आशास्महे तद्वृत्तसंक्षेपमेतं पठित्वा भविष्यति कियतां हृदि कौतूहलोल्लासः। तेषामुपकारार्थं दीयन्तेऽत्र कतिपयेषां पुस्तकानां नामानि। तानधीत्य ते विषयमेतमशेषमनुशीलयन्तु। संस्कृते हिन्दीभाषायां वा नास्ति कोऽपि समुचितो ग्रन्थ इति खिद्यति नश्चित्तम्। जिज्ञासायामुद्बुद्धायां सोऽपि सुलभो भविष्यतीति जायतेऽस्माकमाशा।

इद किमपि तद्वृत्तं लिखितं शुद्धबुद्धितः।
भवेद्भगवतः प्रीत्यै सर्वज्ञस्य दयानिधेः॥

---

# कतिपयेषां सहायकग्रन्थाना

# सूची

—:o:—


*Law, B. C.*—History of Pali Literature.

*Winternitz, M.*—History of Indian Literature, Vol. II.

" —Article on 'Jatak' in the Encyclopaedia of Religion & Ethics.

*Jataka*—Text and Commentary ( अत्थवण्णाना ) Edited by V. Fausboll, in 5.Vols.

*Jataka.*—English Translation, Edited by Cowell, Cambridge University Press.

" बङ्गानुवाद :—ईशागचन्द्रघोपकृतः पञ्चभागेषु प्रकाशितः ।

*Ryhs Davids*—Buddhist Birth Stories

निदानकथाया अनुवादो भूमिकासमन्वितः ) ।

पण्डित विधुशेखरशास्त्री—पालीप्रकाशः ( बङ्गला ) ।

पण्डित आद्यादत्तठाकुर—पालीप्रबोध ( हिन्दी ) ।

*Ghose M. K.*—Pali Transtation and Composition.

जातक कथामाला—श्रीरामचन्द्र वर्माकृत कुछ जातकों का हिन्दी अनुवाद ।

*Joshi*—A Manual of Pali.

## अत्रत्यजातकानां कथासंक्षेपः।

### १. शिशुमारजातकम्–

वानरस्य हृन्मांसे मे दोहदः समुत्पन्न इति भार्यया विज्ञापितः शिशुमारो वानरं स्वपृष्ठमारोप्य कैतवेन जले निमज्जयितुमीहते। किन्तु हृदयानि नः पादपेष्ववलम्बन्ते वानरेण प्रतारितः स तमुदुम्बरमूलं प्रापयति। तत्पृष्ठतः समुत्पत्य वानरो वृक्षाग्रमीहति।

### २. वानरेन्द्रजातकम्–

नद्याः [illegible]त् प्रतिनिवर्तमानस्य वानरस्य ग्रहणार्थं शिशुमारः पृष्ठिपाषाणो [illegible] भूत्वा तीरे समवतिष्ठते वानरश्छलेन तं संलाप्य मुखं व्यादाय मां प्रतीक्षस्वेत्युक्त्वा तडिदिव समुत्पत्य तत्पृष्ठे निपत्याशु क्षणात् परपारं प्राप्नोति।

### ३. बकजातकम्–

बकः काकणान् मत्स्यान् सरोऽयन् नेष्यामीति नीत्वा नीत्वा तान् निभृतं खादति। कर्कटकस्तत्कण्ठमालम्ब्य गच्छन् कूटकपटमस्य विज्ञाय कर्तरिकयेव ग्रीवामस्य कृन्तन् मारयति।

### ४. सिंहचर्मजातकम्–

सिंहचर्मपरिच्छन्नो गर्दभः समुक्त क्षेत्रेषु शस्यानि खादति। एकदा तं व्याघ्रं मत्वा जना दूरादेव विपुलं कोलाहलं चक्रुः। महान्तमारवमाकर्ण्य गर्दभेन स्वस्वरेणारावि। गर्दभोऽयमिति ज्ञात्वा जनास्तं लगुडमारं मारयित्वा पञ्चत्वमेवानैषिपुः।

## ५. राधजातकम्–

ब्राह्मणो गृहीत् प्रोष्यन् पुत्रकौ ! मे ब्राह्मणीमवेक्षेयमिति गृहस्थौ शुकपोतकावेवामन्त्र्य प्रस्थितः। गते तस्मिन ब्राह्मणी यथेच्छमाचरितुमुपाक्रमत। तयोरेकस्तदन्येन निषिद्धोऽपि तां हितमुपदिशन् तया प्राणैर्वियुयुजे। तदन्यः समुपागतं ब्राह्मणं सर्वमाख्याय ततो गतः।

## ६. नृत्यजातकम्–

हंसराजकन्या मयूरं वरं वृणुते स्म। हर्षोत्कर्षेण सर्वं विस्मृत्य तत्रैव नर्तितुमारेभे। हंसराजस्तदालोक्य नाहमीदृशाय स्वकन्यां दास्यामीति निश्चित्य हंसपोतकायैव तामदात्।

## ७ उलूकजातकम्–

पक्षिणोऽपि कमपि नृपं चिकीर्षव उलूकं वरयामासुः। किन्तु काकस्तद्विरोधमकार्षीत्। ततः प्रभृति काकोलूकीयं वैरं प्रावृतत। पक्षिणः सुवर्णहंसं राजानमकार्षुः।

## ८ कुरङ्गमृगजातकम्–

मृगः शतपत्रः कच्छपश्चेति त्रयः सुहृदः सुसुखं निवसन्ति स्म। एकदा लुब्धकपाशगृहीतं मृगमालोक्य शतपत्रो गत्वा यावल्लुब्धकस्य आगमने विघ्नमाचरति तावत् कच्छपस्तत् पाशांश्छिनत्ति। अथ लुब्धक आगत्य कच्छपमादत्ते। मृगो लुब्धकं प्रलोभ्य दूरं नयति मार्गान्तरेणागत्य कच्छपं मोचयति।

## ९. यवशकुनजातकम्–

सिंहस्य गलेऽस्थिखण्डमलगत्। तं पीडाव्याकुलमालोक्य शकुनो न त्वा खादयिष्यामीति तेन प्रतिश्राव्य तन्मुखे दण्डकं च स्था-

पयित्वा प्राविशत् तदस्थिखण्डं चाकृषत् । अथान्येद्युर्महिषं खादन्तमालोक्य सिंहमपृच्छत् किमपि शकुनः । मम दन्तान्तरगतोऽपि जीवसीत्येव बहु मन्यस्वेति श्रुत्वा शकुनो गाथां गायन्नुड्डीनः ।

### १०. शशजातकम्–

शशो मर्कटः शृगाल उद्रश्चेति चत्वारि मित्राण्यभूवन् । शशो विधुमालोक्य श्वः उपवसथकाल इति विज्ञाय तेभ्यश्च धर्माचरणमादिदेश । सर्वे यथाशक्ति प्रायतन्त । शक्रः शशस्य धर्मपरीक्षितुमागात् । तदीयमलौकिकत्यागमालोक्य तं बहुशः प्रशंसन् स्वस्थानं गतः ।

### ११. मृतकभक्तजातकम्–

कश्चित् कोविदः श्राद्ध चिकीर्षुः स्वशिष्यान् छागं स्नापयित्वा तत्रानेतु समादिशत् । स्नातमात्रश्छागो जहासोच्चै रुरोद च । तदनन्तरमेतदुभयकारणं श्रुत्वा स विद्वान् तममुञ्चत् । यावद् ग्रीवां प्रसार्य घासमत्तु याति तावत् पतत्यशनिः पञ्चत्वं चोपनीयेते स च्छागः ।

### १२. बावेरुजातकम्–

बावेरुराष्ट्रे पक्षिणो नाभूवन् । देशान्तरागताद वणिजः काकं क्रीत्वा जनास्तमेव बहुमन्यन्ते स्म । स एव वणिक् कालान्तरे मयूरमादाय तत्र गतः । सम्प्रति मयूरमासाद्य ते प्रीततरा बभूवुः । समामते मयूरे समादरः काकस्य समद्रवत् । स स्वोचितमेव पदं तदानी प्रापितः ।

### १३. वलाहाश्वजातकम्–

श्रीवस्तुवासिन्यो यक्षिण्यश्छलेन भग्नपोतान् वणिजः प्रलोभ्य स्वनगरं नयन्ति स्म, यथावसरं तान् खादन्ति स्म च । एकदा पञ्चशतं

वणिजस्तत्र तथैव प्रासादाभिस्तथैव प्रलोभ्य नगरं नीताः । ज्येष्ठवणिगासां यक्षिणीभावं ज्ञात्वा कतिपयैः सार्धं पलायितो बलाहकाश्वेन स्वगृहं प्रापितः ।

## १४. सुपारगजातकम्–

सुपारगो नाम निर्यामकश्रेष्ठः प्रवृद्धवयस्त्वात् स्वकर्म प्रविहाय गतोऽर्थार्जनीय-कर्मणि प्रविष्टः । तस्यादभुतकौशलं प्रदर्शयतोऽप्यस्य तदुचितसमादरो नाऽभूत । स्वस्थानमेव स प्रत्यागमत । सोऽन्धोऽपि कृतेऽपि प्रत्याख्याने वणिग्भिर्निर्यामक-कर्मणि न्ययुज्यत । विविधान् समुद्रभागान् गत्वा व्यापारं च विपुलं विधाय निर्विघ्नः स्वदेशमुपागतम् ।

## १५. शीलानिशंसजातकम्–

एकदा कश्चिदार्यश्रावको नापितपुत्रेण सार्धं नावमध्यारोहत् । सप्तमे दिवसे नौः समुद्रमध्ये भिन्ना । शीलादिसद्गुणोपेतत्वात् स उपासको देवतया रक्षितः । तस्य प्रार्थनया नापितोऽपि रक्षितः ।

## १६. चर्मशाटकजातकम्–

कोऽपि चर्मशाटकः परिव्राट् युध्यमानमेवापक्रामन्तं मेषमेकं दृष्ट्वा अयं मम गुणान् जानाति सम्मानं च करोतीति निश्चितोऽचिन्तयत् । एत-न्निगदत्येव स मेषः सहसोत्प्लुत्य तथा तं प्रहृतवान् तथाऽयं धरण्यां विगतासुः पपात ।

## १७. उत्सङ्गजातकम्–

कस्याश्चित् स्त्रियः पतिः पुत्रो भ्राता च राजपुरुषैर्गृहीताः । राज्ञा पृष्टा सा योषित् स्वभ्रातुरेव मुक्तिं प्रार्थितवती । सहोदरो भ्राता दुर्लभ इति तत्त्वं परिज्ञाय राजा प्रीतः सन् त्रीणपि बन्धनात् मुमोच ।

## १८. वैदर्भजातकम्—

आचार्यः सशिष्यो विपिने गच्छन् दस्युभिर्गृहीतः। धनमानीय स्वाचार्यं माचयेति शिष्यस्तैः प्रेषितः। गच्छता विप्रेण प्रतिबोधितो भूत्वाऽपि स मन्त्रबलेन रत्नवर्षामकार्षीत्। रत्नलोभोपहताः सर्वेऽपि बभूवुः। शिष्यः परावृत्य दृष्ट्वा च सर्वं रत्नान्याददे। प्राणैर्वियुक्तो गृहमागतो दानादिधर्ममाचरन् सुखं जीवनमयापयत्।

## १९. राजाववादजातकम्—

कोऽपि राजा निजावगुणानवगन्तुं स्थानात् स्थानान्तरं परिबभ्राम। स हिमवत्प्रदेशं प्राप्य बोधिसत्त्वाश्रमं प्रविवेश। तेन दत्तानि फलानि च बुभुजे। कस्मादिमानि सुमधुराणीत्युक्तो बोधिसत्त्वः प्राह—राजा यदा धार्मिको भवति तदा सर्वमेनैवं भवति। राजा प्रत्यागत्य स्वराज्यं धर्माचरणमारेभे। पुनस्तदाश्रमं गतो फलानि न तथा मधुराणि समुपलेभे। कारणं पृच्छंस्तेनोक्तः—राजा यदा स्वधर्मं यथावन्नावेक्षते तदा फलानि विस्वादूनि भवन्ति। राजा तं प्रणिपत्य गतः स्वदेशे यथावद् धर्मेण पालयामास पृथिवीम्।

## २०. मखादेवजातकम—

मखादेवो नाम राजा बभूव। स नापितेन विज्ञापितो देव! तवैकः केशः श्वेतीभूत इति महान्तं वैराग्यमापन्नः। स्वसुताय राज्यं प्रदाय प्रव्रज्यां जग्राह। चिरं तपांसि तप्त्वा स प्राप स्वपुण्यार्जितं ब्रह्मलोकम्।

---

नमो तस्स भगवतो अरहतो सम्मासंबुद्धस्स
नमस्तस्मै भगवते अर्हते सम्यक्संबुद्धाय

# पालिजातकावलिः

# ( १ ) शिशुमारजातकम्

[ इदं शास्ता[१] जेत्रवने विहरन् देवदत्तस्य वधाय परिशाकन[२] मारभ्या-[३]ऽचकथत्। तदा हि शास्ता 'देवदत्तो वधाय परिशक्यति' इति श्रुत्वा 'न भिक्षवः! इदानिमेव देवदत्तो मम वधाय परिशक्यति, पूर्वमपि परिशक्यत्येव। सन्त्रासमात्रमपि पुनः कर्तुं नाऽशकत्' इत्युक्त्वाऽतीतमाहार्षीत्। ]

अतीते वाराणस्यां ब्रह्मदत्ते राज्यं कुर्वति हिमवत्प्रदेशे बोधिसत्वः कपियोन्यां निर्वृत्य नागबलः स्थामसम्पन्नो महाशरीरः सौभाग्यप्राप्तो भूत्वा गङ्गानिवर्तने अरण्यायतने वासमचिक्लिपत्। तदा गङ्गायामेकः शिशुमारोऽवात्सीत्। अथाऽस्य भार्या बोधिसत्वस्य शरीरं दृष्ट्वा तस्य हृदयमांसे दोहदमुत्पाद्य शिशुमारमाह—'अहं स्वामिन्! एतस्य कपिराजस्य हृदयमांसं खादितुकामा' इति। भद्रे! वयं जलगोचराः, एष स्थलगोचरः किमपि तं ग्रहीतुं शक्ष्यामः?' इति। 'येन केनोपायेन गृहाण, चेन्न लप्स्ये मरिष्यामि' इति। 'तेन मा भैषीः, अस्त्येक उपायः इति खादयिष्यामि त्वां तस्य हृदयमांसम्' इति शिशुमारीं समाश्वास्य बोधिसत्त्वस्य गङ्गायाः पानीयं पीत्वा गङ्गातीरे निषण्णकाले अन्तिकं गत्वा एवमाह—'वानरेन्द्र! अस्मिन् प्रदेशे कष्टफलानि खादन् किं त्वं चीर्णस्थान एव चरसि। पारगङ्गायां आम्रलकुचादीनां मधुरफलानां अन्तो नास्ति, किं ते तत्र गत्वा फलाफलं खादितुं न वर्तते' इति। कुम्भीलराज! गङ्गा महोदका विस्तीर्णा, कथं तत्र गमिष्यामि' इति। 'चेत् गच्छसि अहं त्वां मम पृष्ठमारोप्य नेष्यामि' इति। स तं श्रद्धाय साध्विति

---

१ 'शासु अनुशिष्टौ' इत्यस्मात् 'तृन्-तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ' इत्यौणादिकसूत्रेण तृन् तृच् वा। 'शास्ता समन्तभद्रे ना, शासके पुनरन्यवत्' इति मेदिनी च। शास्ता बुद्धः। २ 'शक मर्षणे' इत्यस्मादिदमवगन्तव्यम्। ३ आलम्ब्य, उद्दिश्येत्यर्थः।

## १—सुंसुमार-जातकं

[ इदं सत्था जेतवने विहरन्तो देवदत्तस्स वधाय परिसक्कनं आरब्भ कथेसि। तदा हि सत्था 'देवदत्तो वधाय परिसक्कती' ति सुत्वा 'न भिक्खवे इदानेव देवदत्तो मय्हं वधाय परिसक्कति, पुब्बेपि परिसक्कति येवा' ति वत्वा 'सन्तास-मत्तम्पि पन कातुं न सक्खी' ति वत्वा अतीतं आहरि। ]

अतीते बाराणसियं ब्रह्मदत्ते रज्जं कारेन्ते हिमवन्तपदेसे बोधि-सत्तो कपियोनियं निब्बत्तित्वा नागबलो थामसम्पन्नो महासरीरो सोभग्गप्पत्तो हुत्वा गङ्गानिवत्तने अरञ्ञायतने वासं कप्पेसि। तदा गङ्गाय एको सुंसुमारो वसि। अथस्स भरिया बोधिसत्तस्स सरीरं दिस्वा तस्स हदयमंसे दोहळं उप्पादेत्वा सुंसुमारं आह—'अहं सामि, एतस्स कपिराजस्स हदयमंसं खादितुकामा' ति। 'भद्दे, मयं जल-गोचरा, एस थलगोचरो, किन्ति नं गण्हितुं सक्खिस्सामा' ति? 'येन केन उपायेन गण्ह, सचे न लभिस्सामि मरिस्सामी' ति। 'तेन हि मा भायि, अत्थेको उपायो' ति 'खादापेस्सामि तं तस्स हदयमंसं' न्ति सुंसुमारिं समस्सासेत्वा बोधिसत्तस्स गङ्गाय पानीयं पिवित्वा गङ्गातीरे निसिन्नकाले सन्तिकं गन्त्वा एवमाह—'वानरिन्द, इमस्मिं पदेसे कसटफलानि खादन्तो किं त्वं चिण्णट्ठाने येव चरसि, पार-गङ्गाय अम्बलबुजादीनं मधुरफलानं अन्तो नत्थि, किं ते तत्थ गन्त्वा फलाफलं खादितुं न वट्टती' ति।' 'कुम्भीलराज, गङ्गा महोदिका वित्थिण्णा, कथं तत्थ गमिस्सामी' ति।' 'सचे गच्छसि अहं तं मम पिट्ठिं आरोपेत्वा नेस्सामी' ति। सो तं सद्दहित्वा 'साधू' ति

संप्रतोष्य तेन हि 'एहि पृष्ठं मे अभिरोह' इति चाक्ते तमभ्यरुक्षत् । शिशुमारस्तकं नीत्वा उदके अवासीषदत् । बोधिसत्त्वः सौम्य ! उदके मामवसादयसि; किं नु खलु एतत्' इत्याह । 'नाहं त्वां धर्मे सुधर्मतया; गृहीत्वा गच्छामि, भार्यायाः पुनर्मे तव हृदयमांसे दोहद उत्पन्नः, तामहं तव हृदयं खादितुकाम' इति । 'सौम्य ! कथयता त्वया सुन्दरं कृतं, चेत् हि अस्माकं उदरे हृदयं भवेत् शाखाग्रेषु चरता चूर्णविचूर्णं भवेत्' इति । 'कुत्र पुनः यूयं स्थापयथ' इति बोधिसत्त्वः अविदूरे एकमुदुम्बरं पक्वफलपिण्डसम्पन्नं दर्शयन् 'पश्यैतानि अस्माकं हृदया न एकस्मिन् उदुम्बरे अवलम्बन्ते इति । 'चेन्मे हृदयं दास्यसि अहं त्वां न मारयिष्यामि' इति । तेन हि 'अत्र नय मां अहं ते वृक्षे अवलम्बमानं दास्यामि' इति । स तमादाय तत्रागमत् । बोधिसत्त्वस्तस्य पृष्ठत उत्पत्य उदुम्बरवृक्षे निषद्य 'सौम्य बाल शिशुमार ! एतेषां सत्त्वानां हृदयं नाम वृक्षाग्रे भवन्तीति सञ्ज्ञी अभूः ! बालोऽसि, अहं त्वामवावञ्चे । तव फलाफलं तवैव भवतु । शरीरमेव पुनस्ते महत्, प्रज्ञा पुनर्नास्ति' इत्युक्त्वा इममर्थं प्रकाशयन् इमे गाथे अवोचत्—

अलमेतैराम्रैः जम्बुभिः पनसैश्च ।
यानि पारं समुद्रस्य वरं मम उदुम्बरः ॥
महती वत ते काया[1] न च प्रज्ञा तदूपिका ।
शिशुमार ! वञ्चितोऽसि गच्छेदानीं यथासुखम् ॥ इति

शिशुमारः सहस्रं पराजित इव दुःखी दुर्मना प्रध्यायन आत्मनो निवासस्थानमेव गतः ।

[ शास्तेदं देशनमाहृत्य जातकं समवादीधपत्— 'तदा शिशुमारो देवदत्तोऽभूत् । शिशुमारी चिञ्चामाणविका, कपिराजः पुनरहमेव' इति ।

इति शिशुमारजातकम् ।

---

१. 'बोन्दि' इति शरीरवाची देशी शब्दः । बुध्नशब्दसंबद्ध इति केचित् ।

सम्पटिच्छित्वा—'तेन हि 'एहि, पिट्ठिं मे अभिरुहा'ति वत्वा तं अभिरुहि। सुसुमारो थोकं नेत्वा उदके ओसीदापेसि। बोधिसत्तो 'सम्म, उदके मं ओसीदापेसि, किन्नु खो एतन्ति आह। 'नाहं तं धम्मसुधम्मताय गहेत्वा गच्छामि, भरियाय पन मे तव हदयमंसे दोहळो उप्पन्नो, तं अहं तव हदयं खादापेतुकामो'ति।' सम्म, कथेन्तेन ते सुन्दरं कतं, सचे हि अम्हाकं उदरे हदयं भवेय्य साखग्गेसु चरन्तानं चुण्णविचुण्णं भवेय्या'ति। 'कहं पन तुम्हे ठपेथा'ति बोधिसत्तो अविदूरे एकं उदुम्बरं पक्कफलपिण्डिसञ्छन्नं दस्सेन्तो पस्सेतानि अम्हाकं हदयानि एकस्मिं उदुम्बरे ओलम्बन्ती'ति। 'सचे मे हदयं दस्सासि अहं तं न मारेस्सामी'ति। तेन हि 'एत्थ नेहि मं, अहं ते रुक्खे ओलम्बन्तं दस्सामी'ति। सो तं आदाय तत्थ अगमासि। बोधिसत्तो तस्स पिट्ठितो उप्पतित्वा उदुम्बररुक्खे निसीदित्वा 'सम्म बाल सुसुमार, इमेसं सत्तानं हदयं नाम रुक्खग्गे होतीति सञ्ञी अहोसि, बालोसि, अहं तं वञ्चेसिं, तव फलाफलं तवेव होतु। सरीरमेव पन ते महन्तं, पञ्ञा पन नत्थी'ति वत्वा। इममत्थं पकासेन्तो इमा गाथा अवोच—

> अलं एतेहि अम्बेहि जम्बूहि पनसेहि च।
> यानि पारं समुद्दस्स वरं मय्हं उदुम्बरो॥
> महती वत ते बोन्दि न च पञ्ञा तदूपिका।
> सुसुमार, वञ्चितोसि गच्छ दानि यथासुख'न्ति॥

सुसुमारो सहस्सं पराजितो विय दुक्खी दुम्मनो पज्झायन्तो अत्तनो निवेसनट्ठानमेव गतो।

[ सत्था इमं देसनं आहरित्वा समोधानेसि— सुसुमारो देवदत्तो अहोसि, सुंसुमारी चिञ्चामाणविका, कपिराजो पन अहं एवा'ति। ]

सुंसुमारजातकं।

## ( २ ) वानरेन्द्र-जातकम्

[ इदं शास्ता वेणुवने विहरन् देवदत्तस्य वधाय परिशकनमारभ्याऽचकथत्। तस्मिन् हि समये शास्ता 'देवदत्तो वधाय परिशक्यति' इति श्रुत्वा 'न भिक्षवः! इदानीमेव देवदत्तो मम वधाय परिशक्यति, पूर्वमपि परिशक्यत्येव। त्रासमात्रमपि कर्तुं नाशकत्' इत्युक्त्वाऽतीतमाहार्षीत्। ]

अतीते वारणस्यां ब्रह्मदत्ते राज्यं कुर्वति बोधिसत्त्वः कपि-योन्यां निर्वृत्य वृद्धिमवेत्य अश्वपोतप्रमाणः स्थामसम्पन्नः एकचरो भूत्वा नदीतीरे विहरति। तस्याः पुनर्नद्याः विमध्ये एको द्वीपको नानाप्रकारैः! आम्रपनसादिभिः फलवृक्षैः सम्पन्नः। बोधिसत्त्वो नागबलः स्थामसम्पन्नो नद्यः अवतीरतः उत्पत्य द्वीपकस्य अवरतः नदीमध्ये एकः पृष्ठिपाषाणः अस्ति तस्मिन् निपतति ततः उत्पत्य तस्मिन् द्वीपके पतति। तत्र नानाप्रकाराणि फलानि खादित्वा सायं तेनैवोपायेन प्रत्यागत्य आत्मनो वसनस्थाने उषित्वा पुनर्दिवसेऽपि तथैव करोति। अमुना नियमेन तत्र वासं कल्पयति। तस्मिन् पुनः काले एकः कुम्भीलः सप्रजापतिकः तस्यां नद्यां वसति। सा भार्या बोधिसत्त्वं अपरापरं गच्छन्तं दृष्ट्वा बोधिसत्त्वस्य हृदयांसे दोहदं उत्पाद्य कुम्भीलमाह— 'मम खलु आर्य! अस्य वानरेन्द्रस्य हृदयमांसे दोहद उत्पन्नः' इति। कुम्भीलः 'साधु भवति! लप्स्यसे' इत्युक्त्वा 'अद्य तं सायं द्वीपकतः आगच्छन्तमेव ग्रहीष्यामि' इति गत्वा पृष्ठिपाषाणे न्यपसत्। बोधिसत्त्वो दिवसं चरित्वा सायाह्नसमये द्वीपस्थित एव पाषाण-मवलोक्य 'अयं पाषाणः इदानीं उच्चतरः ख्यायते, किन्तु कारणम्' इति अचिचिन्तत्। तस्य किल उदकप्रमाणं च पाषाणप्रमाणं च सुव्यवस्थापितमेव। तेनास्य एतदभूत—अद्य अस्य नद्या उदकं नैव हीयते न वर्धते, अथ च पुनरयं पाषाणो महान् भूत्वा प्रज्ञा-यते, कच्चिन्नु खलु अत्र मम ग्रहणार्थाय कुम्भीलो निपन्नः, इति।

## २—वानरिन्दजातकं

[ इदं सत्था वेळुवने विहरन्तो देवदत्तस्स वधाय परिसक्कनं आरब्भ कथेसि। तस्मिं हि समये सत्था 'देवदत्तो वधाय परिसक्कती'ति सुत्वा न भिक्खवे इदानेव देवदत्तो मय्हं वधाय परिसक्कति, पुब्बेपि परिसक्कति येव, तासमत्तम्पि कातुं न सक्खी' ति वत्वा अतीतं आहरि। ]

अतीते बाराणसियं ब्रह्मदत्ते रज्जं कारेन्ते बोधिसत्तो कपि-योनियं निब्बत्तित्वा वुड्ढिं अन्वाय अस्सपोतप्पमाणो थामसम्पन्नो एकचरो हुत्वा नदीतीरे विहरति। तस्सा पन नदिया वेमज्झे एको दीपको नानप्पकारेहि अम्बपनसादीहि फलरुक्खेहि सम्पन्नो। बोधिसत्तो नागबलो थामसम्पन्नो नदिया ओरिमतीरतो उप्पतित्वा दीपकस्स ओरतो नदीमज्झे एको पिट्ठिपासाणो अत्थि तस्मिं निपतति, ततो उप्पतित्वा तस्मिं दीपके पतति। तत्थ नानप्पकारानि फलानि खादित्वा सायं तेनेव उपायेन पच्चागन्त्वा अत्तनो वसनट्ठाने वसित्वा पुनदिवसेपि तथेव करोति। इमिना नियामेन तत्थ वासं कप्पेति तस्मिं पन काले एको कुम्भीलो सपजापतिको तस्सा नदिया वसति। तस्स सा भरिया बोधिसत्तं अपरापरं गच्छन्तं दिस्वा बोधिसत्तस्स हदयमंसे दोहळं उप्पादेत्वा कुम्भीलं आह— 'मय्हं खो अय्य, इमस्स वानरिन्दस्स हदयमंसे दोहळो उप्पन्नो'ति कुम्भीलो 'साधु भोति, लच्छसी'ति वत्वा 'अज्ज तं सायं दीपकतो आगच्छन्तमेव गण्हिस्सामी'ति गन्त्वा पिट्ठिपासाणे निपज्जि। बोधिसत्तो दिवसं चरित्वा सायण्हसमये दीपके ठितो'व पासाणं ओलोकेत्वा 'अयं पासाणो इदानि उच्चतरो खायति, किन्नु कारण'न्ति चिन्तेसि। तस्स किर उदकप्पमाणं च पासाणप्पमाणं च सुव-वत्थापितमेव होति। तेनस्स एतदहोसि—'अज्ज इमिस्सा नदिया उदकं नेव हायति न वड्ढति, अथ च पनायं पासाणो महा हुत्वा पञ्ञा-यति, कच्चि नु खो एत्थ मय्हं गहणत्थाय कुम्भीलो निपन्नो'ति।

सो वीमंसामि ताव नन्ति तत्थेव ठत्वा पासाणेन सद्धिं कथेन्तो विय 'भो पासाण'ति वत्वा पटिवचनं अलभन्तो यावततियं 'पासाणा'ति आह। 'पासाणो कि पटिवचनं न दस्सती'ति। पुनपि नं वानरो 'कि भो पासाण, अज्ज मय्हं पटिवचनं न देसी'ति आह। कुम्भीलो 'अद्धा अञ्ञेसु दिवसेसु अयं पासाणो वानरिन्दस्स पटिवचनं अदासि', दस्सामि दानिस्स पटिवचनन्ति चिन्तेत्वा 'किं भो वानरिन्दा'ति आह। 'को सि त्वं'ति। अहं कुम्भीलो'ति। किमत्थं एत्थ निपन्नोसी'ति। 'तव हृदयमंसं पत्थयमानो'ति। वोधिसत्तो चिन्तेसि। 'अञ्ञो मे गमनमग्गो नत्थि, अज्ज मया एस कुम्भीलो वञ्चेतब्बो'ति। अथ नं एवमाह—'सम्म कुम्भील, अहं अत्तानं तुय्हं परिच्चजिस्सामि, त्वं मुखं विवरित्वामं तव सन्तिकं आगतकाले गण्हाही'ति कुम्भीलानं हि मुखविवटे अक्खीनि निमीलन्ति। सो तं कारणं असल्लक्खेत्वा मुखं विवरि। अथस्स अक्खीनि पिथीयिंसु। सो मुखं विवरित्वा अक्खीनि निमीलेत्वा निपज्जि। वोधिसत्तो तथाभावं ञत्वा दीपिका उप्पतितो गन्त्वा कुम्भीलस्स मत्थकं अक्कमित्वा ततो उप्पतितो विज्जुल्लता विय विज्जोतमानो परतीरे अट्ठासि। कुम्भीलो तं अच्छरियं दिस्वा 'इमिना वानरिन्देन अतिअच्छेरकं कत'न्ति चिन्तेत्वा 'भो वानरिन्द, इमस्मिं लोके चतूहि धम्मेहि समन्नागतो पुग्गलो पच्चामित्ते अभिभवति, ते सब्बेपि तुय्हं अब्भन्तरे अत्थि मञ्ञे'ति वत्वा इमं गाथमाह—

यस्सेते चतुरो धम्मा वानरिन्द ! यथा तव।
सच्चं धम्मो धिती चागो दिट्ठं सो अतिवत्ततीति ॥

एवं कुम्भीलो वोधिसत्तं पसंसित्वा अत्तनो वसनट्ठानं गतो।

[ सत्था 'नभिक्खवेदेवदत्तोइदानेवमय्हं वधायपरिसक्कति, पुब्बेपि रेसक्कतियेवा'ति इमं धम्मदेसनं आहरित्वाअनुसंधिघटेत्वाजातकं ोधानेसि। 'तदा कुम्भीलो देवदत्तोअहोसि, भरियास्स ञ्चामाणविका, वानरिन्दोपन अहमेवा'ति। वानरिन्दजातकं

## ( ३ ) वक-जातकम् ।

[ इदं शास्ता जेतवने विहरन् चीवरवद्धकं भिक्षुमारभ्याऽचकथत्...शास्ता 'न भिक्षवः ! जेतवनवासिचीवरवद्धक इदानीमेवैष अन्यान् वञ्चयते, पूर्वमपि वञ्चयते एव । ग्रामवासिकेनाऽपि इदानीमेवैष जेतवनवासिचीवरवद्धको वञ्चितः पूर्वमपि वञ्चित एव' इत्युक्त्वाऽतीतमाहार्षीत् । ]

अतीते एकस्मिन् अरण्यायतने बोधिसत्वोऽन्यतरं पद्मसरो निःश्रित्य स्थिते वृक्षे वृक्षदेवता भूत्वा न्यवृतत् । तदा अन्यतरस्मिन् न तिमहति सरसि निदाघसमये उदकं मन्दमभूत् । बहवश्चात्र मत्स्या अभूवन् । अत्रैको वकः तान् मत्स्यान् दृष्ट्वा 'एकेनोपायेन इमान् मत्स्यान् वञ्चयित्वा खादिष्यामि' इति गत्वा उदकपर्यन्ते चिन्तयन् न्यसदत् । अथ तं मत्स्या दृष्ट्वा 'किमार्य ! चिन्तयन् निषण्णोऽसि' इति अप्राक्षुः । 'युष्माकं चिन्तयन् निषण्णोऽस्मि' इति । 'अस्माकं किं चिन्तयसि आर्य अस्मिन् सरसि उदकं प्ररिक्तम्, गोचरश्च मन्दो, निदाघश्च महान्, इदानीं मे मत्स्याः किं नाम करिष्यन्ति इति । युष्माकं चिन्तयन् निषण्णोऽस्मि' इति । अथ किं कुर्मः आर्य' इति । 'यूयं चेत् मम वचनं कुर्यात्, अहं वः एकैकं मुखतुण्डकेन गृहीत्वा एवं पञ्चवर्णपद्मसंच्छन्नं महासरो नीत्वा विसर्जयेयम्' इति । 'आर्य प्रथमकल्पकतः पृथिव्यां मत्स्यानां चिन्तनकवको नाम नास्ति, त्वं अस्मासु एकैकं खादितुकामोऽसि' इति । 'नाहं युष्मान् मयि श्रद्दधानान् खादिष्यामि । चेत् पुनः सरसः अस्तिभावं मम न श्रद्दत्थ, एकं मत्स्यं मया सार्धं सरः प्रेषयथ' इति । मत्स्या तस्य श्रद्धाय 'अयं जलेऽपि स्थलेऽपि समर्थः' इति । एकं काणमहामत्स्यमदद्हुः 'इमं गृहीत्वा गच्छ' इति । स तं गृहीत्वा नीत्वा सरसि विलाज्य सर्वं सरो दर्शयित्वा पुनरानीय तेषां मत्स्यानामन्तिके व्यसृक्षीत् । स तेषां मत्स्यानां सरसः सम्पत्तिमववर्णत् । ते तस्य कथां श्रुत्वा गन्तु-कामा भूत्वा 'साधु आर्य अस्मान् गृहीत्वा गच्छ' इति आहुः ।

## ( ३ ) वक-जातकं।

[ इदं सत्था जेतवने विहरन्तो चीवरवड्ढकं भिक्खुं आरब्भ कथेसि।... सत्था 'न भिक्खवे, जेतवनवासी चीवरवड्ढको इदानेव एस अञ्ञे वञ्चेति, पुब्बेपि वञ्चेसि येव। न गामवासिकेन पि इदानेव जेतवनवासी चीवरवड्ढको वञ्चितो पुब्बेपि वञ्चितो येवा'ति वत्वा अतीतं आहरि। ]

अतीते एकस्मिं अरञ्ञायतने बोधिसत्तो अञ्ञतरं पदुमसरं निस्साय ठिते रुक्खे रुक्खदेवता हुत्वा निब्बत्ति। तदा अञ्ञतरस्मिं नातिमहन्ते सरे निदाघसमये उदकं मन्दं अहोसि, बहू चेत्थ मच्छा होन्ति। अथेको वको ते मच्छे दिस्वा 'एकेन उपायेन इमे मच्छे वञ्चेत्वा खादिस्सामी'ति गन्त्वा उदकपरियन्ते चिन्तेन्तो निसीदि। अथ तं मच्छा दिस्वा 'किं अय्य, चिन्तेन्तो निसिन्नोसी'ति पुच्छिंसु। 'तुम्हाकं चिन्तेन्तो निसिन्नोम्ही'ति। 'अम्हाकं किं चिन्तेसि अय्या'ति। 'इमस्मिं सरे उदकं परित्तं गोचरो च मन्दो, निदाघो च महन्तो, इदानिमे मच्छा किं नाम करिस्सन्तीति तुम्हाकं चिन्तेन्तो निसिन्नोम्ही'ति। 'अथ किं करोम अय्या'ति। 'तुम्हे सचे मय्हं वचनं करेय्याथ अहं वो एकेकं मुखतुण्डकेन गहेत्वा एकं पञ्चवण्णपदुमसञ्छन्नं महासरं नेत्वा विस्सज्जेय्यन्ति।' 'अय्य, पठमकप्पिकतो पट्ठाय मच्छानं चिन्तनकवको नाम नत्थि, त्वं अम्हेसु एकेकं खादितुकामोसी'ति। 'नाहं तुम्हे मय्हं सद्दहन्ते खादिस्सामि, सचे पन सरस्स अत्थिभावं मय्हं न सद्दहथ एकं मच्छं मया सद्धिं सरं पस्सितुं पेसेथा'ति। मच्छा तस्स सद्दहित्वा 'अयं जलेपि थलेपि समत्थो'ति एकं काणमहामच्छं अदंसु—'इमं गहेत्वा गच्छथा'ति। सो तं गहेत्वा नेत्वा सरे विस्सज्जेत्वा सब्बं सरं दस्सेत्वा पुन आनेत्वा तेसं मच्छानं सन्तिके विस्सज्जेसि। सो तेसं मच्छानं सरस्स सम्पत्तिं वण्णेसि। ते तस्स कथं सुत्वा गन्तुकामा हुत्वा 'साधु अय्य, अम्हे गण्हित्वा गच्छाही'ति आहंसु

बकः प्रथमं तं काणमहामत्स्यमेव गृहीत्वा सरस्तीरं नीत्वा सरो दर्शयित्वा सरस्तीरे जाते वरणवृक्षे निलीय तं विटपान्तरे प्रक्षिप्य तुण्डेन विध्यन् जीवितक्षयं प्रापय्य मांसं खादित्वा कण्टकान् वृक्षमूले पातयित्वा पुनर्गत्वा 'विसृष्टो मे स मत्स्यः अन्य आगच्छतु' इति। एतेनोपायेन एकैकं गृहीत्वा सर्वमत्स्यकान् खादित्वा पुनरागतो एकमत्स्यमपि नाऽद्दक्षत्। एकः पुनरत्र कर्कटको अवशिष्टः। बकस्तमपि खादितुकामो भूत्वा 'भो कर्कटक! मया सर्वे ते मत्स्याः नीत्वा पद्मसंच्छन्ने महासरसि विसृष्टाः, एहि त्वामपि नेष्यामि' इति 'मां गृहीत्वा गच्छन् कथं ग्रहीष्यति' इति। 'दष्ट्वा ग्रहीष्यामि' इति। 'त्वमेवं गृहीत्वा गच्छन् मां पातयिष्यसि, नाहं त्वया सार्धं गमिष्यामि' इति। 'मा भैषीः अहं त्वां सुगृहीतं गृहीत्वा गमिष्यामि' इति'। कर्कटकोऽचिचिन्तत् 'अस्य मत्स्यान् नीत्वा सरसि विसर्जनं नाम नास्ति। चेत् पुनर्मां सरसि विसृक्ष्यति, इत्येतत् कुशलम्। नो चेत् विसर्जयिष्यति, ग्रीवा अस्य छित्वा जीवितं हरिष्यामि' इति। अथैनमेवमाह— 'सौम्य बक! न खलु त्वं सुगृहीतं ग्रहीतुं शक्ष्यसि, अस्माकं पुनर्ग्रहणं सुग्रहणम्। स चाहं अळेण तव ग्रीवा ग्रहीतुं लप्स्ये, तव ग्रीवां सुगृहीतां कृत्वा त्वया सार्धं गमिष्यामि' इति। स तं वंचितुकाम एष मां इति अजानन्, साध्विति संप्रत्यैषीत्। कर्कटकः आत्मनः अळैः कर्मकारसन्देशेनेव तस्य ग्रीवां सुगृहीतां कृत्वा 'इदानीं गच्छ' इत्याह। स तं नीत्वा सरो दर्शयित्वा वरणवृक्षाभिमुखं प्रायासीत्। कर्कटकः आह—'मातुल, इदं सरः अत्र, त्वं पुनः इतो नयसि' इति। बकः 'प्रिय मातुलक! अतिभागिनिपुत्रोऽसि मे त्वं' इत्युक्त्वा 'त्वमेष मा उत्क्षिप्य विचरन् मम दासः इति संज्ञां करोषि मन्ये। पश्यैतं वरणवृक्षमूले कण्टकराशिं यथा मया ते सर्वे मत्स्याः खादिताः त्वामपि तथैव खादिष्यामि' इत्याह। कर्कटकः 'एते मत्स्याः आत्मनो बालतया त्वया खादिताः। अहं पुनस्ते मां खादितुं

वको पठमं तं काणमहामच्छमेव गहेत्वा सरतीरं नेत्वा सरं दस्सेत्वा सरतीरे जाते वरणरुक्खे निलीयित्वा तं विटपन्तरे पक्खिपित्वा तुण्डेन विज्झन्तो जीवितक्खयं पापेत्वा मंसं खादित्वा कण्टके रुक्खमूले, पातेत्वा पुन गन्त्वा 'विस्सट्ठो मे सो मच्छो, अञ्ञो आगच्छतू'ति। एतेनुपायेन एकेकं गहेत्वा सब्बमच्छके खादित्वा पुन आगतो एकमच्छम्पि नाद्दस। एको पनेत्थ कक्कटको अवसिट्ठो। वको तम्पि खादितुकामो हुत्वा 'भो कक्कटक, मया सब्बे ते मच्छा नेत्वा पदुमसञ्छन्ने महासरे विस्सज्जिता, एहि तम्पि नेस्सामी'ति। 'मं गहेत्वा गच्छन्तो कथं गण्हिस्ससी'ति 'डसित्वा गण्हिस्सामी'ति। 'त्वं एवं गहेत्वा गच्छन्तो मं पातेस्ससि, नाहं तया सद्धिं गमिस्सामी'ति। 'मा भायि अहं तं सुगहितं गहेत्वा गमिस्सामी'ति। कक्कटको चिन्तेसि—'इमस्स मच्छे नेत्वा सरे विसज्जनं नाम नत्थि। सचे पन मं सरे विस्सज्जेस्सति इच्चेतं कुशल, नो चे विस्सज्जेस्सति, गीवं अस्स छिन्दित्वा जीवितं हरिस्सामी'ति। अथ नं एवं आह— 'सम्म वक, न खो त्वं सुगहितं गहेतुं सक्खिस्ससि, अम्हाकं पन गहणं सुगहणं, सचाहं अळेन तव गीवं गहेतुं लभिस्सामि, तव गीवं सुगहितं कत्वा तया सद्धिं गमिस्सामी'ति। सो तं 'वञ्चेतुकामो एस म'न्ति अजानन्तो 'साधू'ति सम्पटिच्छि। कक्कटको अत्तनो अळेहि कम्मारसण्डासेन विय तस्स गीवं सुगहितं कत्वा 'इदानि गच्छा'ति आह। सो तं नेत्वा सरं दस्सेत्वा वरणरुक्खाभिमुखो पायासि। कक्कटको आह–'मातुल, अयं सरो एत्तो, त्वं पन इतो नेसी'ति। वको 'पियमातुलको अतिभगिनिपुत्तोसि मे त्व'न्ति वत्वा 'त्वं एस मं उक्खिपित्वा विचरन्तो मय्हं दासो'ति सञ्ञं करोसि मञ्ञे, पस्सेतं वरणरुक्खमूले कण्टकरासिं, यथा मे ते सब्बमच्छा खादिता तम्पि तथेव खादिस्सामी'ति आह। कक्कटको 'एते मच्छा अत्तनो वालताय तया खादिता, अहं पन ते मं खादितुं

न दास्यामि। त्वामेव पुनः विनाशं प्रापयिष्यामि। त्वं हि बालतया मम वञ्चितभावं न जानासि, म्रियमाणौ उभौ अपि मरिष्यावः। एष ते शीर्षं छित्वा भूम्यां क्षेप्स्यामि' इत्युक्त्वा संदंशेन अळैः तस्य ग्रीवां न्यपिपीडत्। स वृत्तकृतेन मुखेन अक्षिभ्यां अश्रुणा प्रक्षरता मरणभयतर्जितः 'स्वामिन् अहं न खादिष्यामि, जीवितं मे देहि' इत्याह। 'यद्येवं अवतार्य सरसि मां विसृज' इति। स निवृत्य सर एव अवतीर्य कर्कटकं सरःपर्यन्ते पङ्कपृष्ठे अतिष्ठिपत्। कर्कटकः कर्तरिकया कुमुदनलं कल्पयन्निव तस्य ग्रीवां कल्पयित्वा उदकं प्राविक्षत्। तदाश्चर्यं दृष्ट्वा वरणवृक्षे अध्यवस्था देवता साधुकारं ददाना वनं उन्नादयमाना मधुरस्वरेण इमां गाथामाह—

नात्यन्तनिकृतिप्रज्ञो निकृत्या सुखमेधते।
आराध्नोति निकृतिप्रज्ञो वको कर्कटकादिव॥ इति॥

[ शास्ता 'न भिक्षवः! इदानीमेव ग्रामवासिचीवरवर्द्धकेन एष वञ्चितः। अतीतेऽपि वञ्चित एव'इतीमं धर्मदेशनमाहृत्य, अनुसन्धि घटयित्वा जातकं समवादीधपत्—तदा स जेत्रवनवासिचीवरवर्द्धकोऽभूत्, कर्कटको ग्रामवासिचीवरवर्द्धकः, वृक्षदेवता पुनरहमेव'इति। ]

इति वकजातकम्।

—:o:—

## ( ४ ) सिंहचर्मजातकम्।

[ इदं शास्ता जेत्रवने विहरन् कोकालिकमारभ्याऽचकथत्। सोऽस्मिन् काले स्वरभङ्गं भणितुकामोऽभूत। शास्ता तां प्रवृत्तिं श्रुत्वाऽतीतमाहार्षीत। ]

अतीते वाराणस्यां ब्रह्मदत्ते राज्यं कुर्वति बोधिसत्त्वः कर्षककुले निर्वृत्य वयःप्राप्तः कृषिकर्मणा जीवितमच्चिक्लिपत्। तस्मिन् काले एको वणिग् गर्दभभारकेन व्यवहारं कुर्वन् विचरति। स

न दस्सामि, तञ्ञेव पन विनासं पापेस्सामि, त्वं हि बालतया मया वञ्चितभावं न जानसि, मारन्ता, उभोपि मारिस्साम। एस ते सीसं छिन्दित्वा भूमियं खिपिस्सामी'ति वत्वा सण्डासेन अळे हि तस्स गीवं निप्पीळेसि। सो वत्तकतेन मुखेन अक्खीहि अस्सुना पग्घरन्तेन मरणभयतज्जितो 'सामि अहं तं न खादिस्सामि, जीवितं मे देही'ति आह। 'यदि एवं ओतरित्वा सरस्मिं मे विस्सज्जेही'ति सो निवत्तित्व सरमेव ओतरित्वा कक्कटकं सरपरियन्ते पङ्कपिट्ठे ठपेसि। कक्कटको कत्तरिकाय कुमुदनाळं कप्पेन्तो विय तस्स गीवं कप्पेत्वा उदकं पाविसि। तं अच्छरियं दिस्वा वरणरुक्खे अधिवत्था देवता साधुकारं ददमाना वनं उन्नादयमाना मधुरस्सरेन इमं गाथमाह—

> नाच्चन्तं निकतिप्पञ्ञो निकत्या सुखमेधति।
> आराधे निकतिप्पञ्ञो बको कक्कटकामिवा'ति॥

[सत्था 'न भिक्खवे ! इदानेव गामवासी चीवरवड्ढकेन वञ्चितो, अतीतेपि वञ्चितो येवा'ति इमं धम्मदेसनं आहरित्वा अनुसन्धिं घटेत्वा जातकं समोधानेसि 'तदा सो बको जेतवनवासी चीवरवड्ढको अहोसि, कक्कटको गामवासिचीवरवड्ढको, रुक्खदेवता पन अहमेवा'ति।]

बकजातकं।

---

## (४) सीहचम्म-जातकं।

[इदम्पि सत्था जेतवने विहरन्तो कोकालिकं आरब्भ कथेसि। सो इमस्मिं काले सरभञ्ञं भणितुकामो अहोसि। सत्था तं पवत्तिं सुत्वा अतीतं आहरि।]

अतीते बाराणसियं ब्रह्मदत्ते रज्जं कारेन्ते बोधिसत्तो कस्सककुले निब्बत्तित्वा वयप्पत्तो कसिकम्मेन जीविकं कप्पेसि। तस्मिं काले एको वाणिजो गद्रभभारकेन वोहारं करोन्तो विचरति। सो

गतागतस्थाने गर्दभस्य पृष्ठतः भाण्डकं अवतार्य गर्दभं सिंहचर्मणा प्रावृत्य शालियवक्षेत्रेषु विसृजति । क्षेत्ररक्षकाः तं दृष्ट्वा सिंह इति संज्ञाय उपसंक्रमितुं न शक्नुवन्ति । अथैकदिवसे स वणिक् एकस्मिन् ग्रामद्वारे निवासं गृहीत्वा प्रातराशं पाचयन् ततो गर्दभं सिंहचर्म प्रावृत्य यवक्षेत्रे व्यस्राक्षीत । क्षेत्ररक्षकाः सिंह इति संज्ञाय तमुपगन्तुमशक्नुवन्तो गेहं गत्वा अरूरुचन्त । सकलग्रामवासिनः आयुधानि गृहीत्वा शङ्खान् धमन्तो भेरीर्वादयन्तः क्षेत्रसमीपं गत्वोदनादिषुः । गर्दभो मरणभयभीतो गर्दभरवमरावीत् । अथास्स गर्दभभावं ज्ञात्वा बोधिसत्त्वः प्रथमां गाथामाह—

नैतत् सिंहस्य नदितं न व्याघ्रस्य न द्वीपिनः !
प्रावृतः सिंहचर्मणा जाल्मो नदति गर्दभः ॥

ग्रामवासिनोऽपि तस्य गर्दभभावं ज्ञात्वा अस्थीनि भञ्जन्तः पोथयित्वा सिंहचर्मादाय अगमन् । अथ स वणिक् आगत्य तं व्यसनप्राप्तं गर्दभं दृष्ट्वा द्वितीयां गाथामाह—

चिरमपि खलु तं खादेत् गर्दभो हरितं यवम् ।
प्रावृतः सिंहचर्मणा रुवन् च अदूदुषत् ॥

तस्मिन्नेवं वदत्येव गर्दभः तत्रैव अमृत । वणिगपि त प्रहाय प्राक्रामीत् ।

[ शास्तेदं देशनमाहृत्य जातकं यमवादीधपत् । 'तदा गर्दभः कोकालिकोऽभूत । पण्डितकर्षकः पुनरहमेव' इति । ]

इति सिंहचर्मजातकम् ।

नगरसमीपे उत्तरिंसु । ता तेसं सन्तिकं गन्त्वा पलोभेत्वा यक्खनगरं आनेत्वा पठमगहितमनुस्से देवसङ्खलिकाय बन्धित्वा कारणघरे पक्खिपित्वा, जेट्ठयक्खिनी जेट्ठवाणिजं, सेसा सेसे'ति ता पञ्चसता यक्खिनियो ते पञ्चसते वाणिजे अत्तनो सामिके अकंसु । अथ सा जेट्ठयक्खिनी रत्तिभागे वाणिजे निद्दं गते उट्ठाय गन्त्वा कारणघरे मनुस्से मारेत्वा मंसं खादित्वा आगच्छति । सेसापि तथेव करोन्ति । जेट्ठयक्खिनिया मनुस्समंसं खादित्वा आगतकाले सरीरसीतलं होति । जेट्ठवाणिजो परिगण्हन्तो तस्स यक्खिनिभावं ञत्वा 'इमा पञ्चसतापि यक्खिनियो भविस्सन्ति, अम्हेहि पलायितुं वट्टती'ति पुनदिवसे पातोव मुखधोवनत्थाय गन्त्वा सेसवाणिजानं आरोचेसि 'इमा यक्खिनियो न मानुसियो । अञ्ञेसं भिन्ननावानं आगतकाले ते सामिके कत्वा अम्हे खादिस्सन्ति । एथ अम्हे पलायामा'ति । तेसु अड्ढतेय्यसता 'मयं एता विजहितुं न सक्खिस्साम, तुम्हे गच्छथ, मयं न पलायिस्सामा'ति आहंसु । जेट्ठवाणिजो अत्तनो वचनकरे अड्ढतेय्यसते गहेत्वा तासं भीतो पलायि तस्मिं पन काले बोधिसत्तो वलाहस्स योनियं निब्बत्ति, सब्बसेतो काकसीसो मुञ्जकेसो इद्धिमा वेहासंगमो अहोसि । सो हिमवन्ततो आकासे उप्पतित्वा तम्बपण्णिदीपं गन्त्वा तत्थ तम्बपण्णिसरे पल्लले सयंजातसालिं खादित्वा गच्छति । एवं गच्छन्तो-व 'जनपदं गन्तुकामा अत्थि, जनपदं गन्तुकामा अत्थी'ति तिक्खत्तुं करुणाय परिभावितं मानुसिवाचं भासति । ते तस्स वचनं सुत्वा उपसङ्कमित्वा अञ्जलिं पग्गय्ह 'सामि, मयं जनपदं गमिस्सामी'ति आहंसु । 'तेन हि मय्हं पिट्ठिं अभिरुहथा'ति । अथेकच्चे अभिरुहिंसु, एकच्चे वालधिं गण्हिंसु, एकच्चे अञ्जलिं पग्गहेत्वा अट्ठंसु येव । बोधिसत्तो अन्तमसो अञ्जलिं पग्गहेत्वा ठिते सब्बेपि ते अड्ढतेय्यसते वाणिजे अत्तनो आनुभावेन जनपदं

नीत्वा स्वकस्वकस्थानेषु प्रतिष्ठाप्य आत्मनो वसनस्थानं अगमत् । 'ता अपि खलु यक्षिण्यः अन्येषामागतकाले यांस्तत्र अवहीनकान् अर्धतृतीयशतं मनुष्यान् वधित्वा अखादिषुः ।

[ इति शास्ता इमं धर्म्मदेशनमाहृत्य सत्यानि प्रकाशयित्वा जातकं समवादीधपत् । 'तदा बलाहाश्वराजस्य वचनकरा अर्द्धतृतीयशतं वणिजो बुद्धपरिषद् अभूवन् । बलाहाश्वराजः पुनरहमेव' इति । ]

इति बलाहाश्वजातकम् ।

---

## ( १४ ) शूर्पारक-जातकम्

[ इदं शास्ता जैत्रवने विहरन् प्रज्ञापारमितामारभ्याऽचकथत् । एकदिवसे हि सायाह्नसमये तथागतस्य धर्मं देष्टुं निष्क्रमणमागमनयमाना भिक्षवो धर्मसभायां निषद्य···दशबलस्य महाप्रज्ञापारमितामववर्णन् । शास्ताऽऽगत्य 'कस्यां नु स्थ भिक्षवः ! एतर्हि कथायां संनिषण्णाः' इति पृष्ट्वा 'अस्यां नाम' इत्युक्ते "न भिक्षवः ! इदानीमेव तथागतः प्रज्ञावान् पूर्वमपि अपरिपक्वे ज्ञाने प्रज्ञावानेव । अन्धो भूत्वा महासमुद्रे उदकसंज्ञायां 'अस्मिन् समुद्रे इदं नाम इदं नाम रत्नं इत्यज्ञासीत्" इत्युक्त्वाऽतीतमाहार्षीत् । ]

अतीते भरुराष्ट्रे भरुराजा नाम राज्यमकार्षीत् । भरुकच्छं नाम पत्तनग्रामोऽभूत् । तदा बोधिसत्त्वो भरुकच्छे निर्यामकज्येष्ठस्य पुत्रो भूत्वा न्यवृतत, प्रासादिकः सुवर्णवर्णः । शूर्पारककुमारः इति तस्य नाम अकार्षुः । स महता परिवारेण वर्धमानो षोडशवर्षकाले एव निर्यामकशिल्पे निष्पत्तिं प्राप्य अपरभागे पितुरत्ययेन निर्यामकज्येष्ठको भूत्वा निर्यामककर्म आकार्षीत् । पण्डितो ज्ञानसम्पन्नोऽभूत् । तेनारूढनावि व्यापत्तिर्नाम नास्ति । तस्यापरभागे लवणजलप्रहते द्वे अपि चक्षुषी अनशताम् । सततः प्रस्थाय

नेत्वा सकसकट्ठानेसु पतिट्ठपेत्वा अत्तनो वसनट्ठानं अगमासि। तापि खो यक्खिनियो अञ्ञेसं आगतकाले ते तत्थ ओहीनके अड्ढतेय्यसते मनुस्से वधित्वा खादिंसु।

[ इति सत्था इमं धम्मदेसनं आहरित्वा सच्चानि पकासेत्वा जातकं समोधानेसि । 'तदा वलाहस्सराजस्स वचनकरा अड्ढतेय्यसता वाणिजा बुद्धपरिसा अहेसुं । वलाहस्सराजा पन अहमेवा'ति । ]

वलाहस्सजातकं ।

---

## १४—सुप्पारकजातकं

[ इदं सत्था जेतवने विहरन्तो पञ्ञापारमिं आरब्भ कथेसि । एकदिवसं हि सायण्हसमये तथागतस्स धम्मं देसेतुं निक्खमनं आगमयमाना भिक्खू धम्मसभायं निसीदित्वा दसबलस्स महापञ्ञापारमिं वण्णेसुं । सत्था आगन्त्वा 'काय नुत्थ भिक्खवे ! एतरहि कथाय सन्निसिन्ना'ति ? पुच्छित्वा 'इमाय नामा'ति वुत्ते न 'न भिक्खवे ! इदानेव तथागतो पञ्ञवा, पुब्बेपि अपरिपक्के ञाणे पञ्ञवाव अन्धो हुत्वा महासमुद्दे उदकसञ्ञाय' 'इमस्मिं समुद्दे इदं नाम रतन'न्ति अञ्ञासी'ति वत्वा अतीतं आहरि । ]

अतीते भरुरट्ठे भरुराजा नाम रज्जं कारेसि । भरुकच्छं नाम पट्टनगामो अहोसि । तदा बोधिसत्तो भरुकच्छे निय्यामकजेट्ठस्स पुत्तो हुत्वा निब्बत्ति, पासादिको सुवण्णवण्णो । सुप्पारककुमारोतिस्स नामं करिंसु । सो महन्तेन परिवारेन वड्ढन्तो सोळसवस्सकाले येव निय्यामकसिप्पे निप्फत्तिं पत्वा अपरभागे पितु अच्चयेन निय्यामकजेट्ठको हुत्वा निय्यामककम्मं अकासि, पण्डितो ञाणसम्पन्नो अहोसि, तेन आरुळ्हनावाय ब्यापत्ति नाम नत्थि । तस्स अपरभागे लोणजलपहटानि द्वेपि चक्खूनि नस्सिंसु । सो ततो पट्ठाय

निर्यामकज्येष्ठको भूत्वाऽपि निर्यामककर्म अकृत्वा 'राजानं निःश्रित्य जीविष्यामि' इति राजानं उपसमक्रमीत् । अथैनं राजा अर्घापनीयकर्मणि अतिष्ठिपत् । ततः प्रस्थाय राज्ञो हस्तिरत्नं अश्वरत्नं मुक्तासारमणिसारादीनि अर्घयति । अथैकदिवसे 'राज्ञो मंगलहस्ती भविष्यति' इति कालपाषाणकूटवर्ण एकं वारणं आनैसीषुः । तं दृष्ट्वा राजा पण्डिताय दर्शयति' इत्याह । अथैनं तस्यान्तिकमनैसिषुः । स हस्तेन तस्य शरीरं परिमृद्य 'नायं मंगलहस्ती भवितुं आनुच्छविकः, पश्चाद् वामनधातुकः एप, एतं हि माता विजायमाना अंसेन प्रतीक्षितुं नाशकत्, तस्मात् भूमौ पतित्वा पश्चिमपादाभ्यां वामनकधातुको जातः' इत्याह । हस्तिनं गृहीत्वा आगतान् अपाक्षुः । 'सत्यं पण्डितः' कथयति इत्यवादिषुः । तत् कारणं राजा श्रुत्वा तुष्टः तस्याष्टकार्षापणान् अदीदपत् । पुनरेकदिवसे 'राज्ञो मङ्गलदाश्वो भविष्यति' इति एकमश्वमानैसिषुः । तमपि राजा पण्डितस्यान्तिकं प्रैषिषत् । स हस्तेन परामृष्य 'अयं मङ्गलाश्वो भवितुं न युक्तः, एतस्य हि जातदिवसे एव माता अमृत, तस्मात् मातुक्षीरं अलभमानो न सम्यक् वर्धितः' इत्याह । साऽप्यस्य कथा सत्यैव अभूत् । तमपि श्रुत्वा राजा तुष्ट्वा अष्टैव कार्षापणान् अदीदपत् । अथैकदिवसे 'मङ्गलरथो भविष्यति' इति रथं आहार्षिषुः । तमपि राजा तस्यान्तिकं पैषिषत् । स तं हस्तेन परामृष्य 'अयं रथः सुषिरवृक्षेण कृतः, तस्मात् राज्ञो नानुच्छविकः' इत्याह । साऽप्यस्य कथा सत्यैव अभूत् । राजा तमपि श्रुत्वा अष्टैव कर्षापणान् अदीदपत् । अथास्य कम्बलरत्नं महार्घं आनैसिषुः । तमपि सस्यैव प्रैषिषत् । स हस्तेन परामृश्य 'अस्य मूषिकच्छिन्नं एकस्थानमस्ति' इत्याह । शोधयन्तः तं दृष्ट्वा राज्ञः आचख्युः । राजा तुष्ट्वा अष्टैव कार्षापणान् अदीदपत् । सोऽचिचिन्तत् 'अयं राजा एवंरूपाण्यपि आश्चर्याणि दृष्ट्वा अष्टैव कार्षापणान् अदीदपत् । अस्य

निय्यामकजेट्ठको हुत्वापि निय्यामककम्मं अकत्वा, राजानं निस्साय
जीविस्सामी'ति राजानं उपसंकमि। अथ नं राजा अग्घापनिय-
कम्मे ठपेसि। ततो पट्ठाय रञ्ञो हत्थिरतनं अस्सरतनं मुत्तसार-
मणिसारादीनि अग्घापेति। अथेकदिवसं 'रञ्ञो मङ्गलहत्थी भवि-
स्सती'ति काळपासाणकूटवण्णं एकं वारणं आनेसुं। तं दिस्वा राजा
'पण्डितस्स दस्सेथा'ति आह। अथ नं तस्स सन्तिकं नयिंसु।
सो हत्थेन तस्स सरीरं परिमज्जित्वा 'नायं मङ्गलहत्थी भवितुं
अनुच्छविको, पच्छावामनकधातुको एस, एतं हि माता विजाय-
माना अंसेन पटिच्छितुं नासक्खि, तस्मा भूमियं पतित्वा पच्छिम-
पादेहि वामनकधातुको जातो'ति आह। हत्थिं गहेत्वा आगते
पुच्छिंसु। ते 'सच्चं पण्डितो कथेती'ति वदिंसु। तं कारणं
राजा सुत्वा तुट्ठो तस्स अट्ठ कहापणे दापेसि। पुनेकदिवसं 'रञ्ञो
मङ्गलस्सो भविस्सती'ति एकं अस्सं आनयिंसु। तम्पि राजा पण्डित-
स्स सन्तिकं पेसेसि। सो हत्थेन परामसित्वा 'अयं मङ्गलस्सो
भवितुं न युत्तो, एतस्स हि जातदिवसे येव माता मरि, तस्मा मातु-
खीरं अलभन्तो न सम्मा वड्ढितो'ति आह। सापिस्स कथा
सच्चा व अहोसि। तम्पि सुत्वा राजा तुस्सित्वा अट्ठेव
कहापणे दापेसि। अथेकदिवसं 'मङ्गलरथो भविस्सती'ति रथं
आहरिंसु, तम्पि राजा तस्स सन्तिकं पेसेसि। सो तं हत्थेन पराम-
सित्वा 'अयं रथो सुसिररुक्खेन कतो, तस्मा रञ्ञो नानुच्छविको'ति
आह। सापिस्स कथा सच्चा व अहोसि। राजा तम्पि सुत्वा
अट्ठेव कहापणे दापेसि। अथस्स कम्बलरतनं महग्घं आनयिंसु।
तम्पि तस्सेव पेसेसि। सो हत्थेन परामसित्वा 'इमस्स मूसिकच्छिन्नं
एकं ठानं अत्थी'ति आह। सोधेन्ता तं दिस्वा रञ्ञो आरोचेसुं।
राजा तुस्सित्वा अट्ठेव कहापणे दापेसि। सो चिन्तेसि 'अयं राजा
एवरूपानि अच्छरियानि दिस्वा अट्ठेव कहापणे दापेसि, इमस्स

दायो नापितदायः । नापितस्य जातको भविष्यति । किं मे एवंरूपेण राजोपस्थानमेव । आत्मनो वसनस्थानमेव गमिष्यामि' इति स भरुकच्छपत्तननेव प्रत्यागमत् । तस्मिन् तत्र वसति वणिजो नावं सज्जयित्वा 'कं निर्यामकं करिष्यामः' इति मन्त्रयन्तः 'शूर्पारकपण्डितेन आरूढनौर्न व्यापद्यते । एष पण्डितः उपायकुशलः अन्धः समानोऽपि शूर्पारकपण्डित एव उत्तमः' इति तं उपसंक्रम्य 'निर्यामको नो भव' इत्युक्त्वा 'ताताः ! अहं अन्धः, कथं निर्यामककर्म करिष्यामि' इत्युक्ते 'स्वामिन् ! अन्धोऽपि त्वमेव अस्माकं उत्तमः' इति पुनः पुनः याच्यमानः 'साधु ताताः ! युष्माभिः आरोचितसंज्ञायां निर्यामको भविष्यामि' इति तेषां नावमभ्यरुहत् । ते नाव्या महासमुद्रं प्रास्कन्दिषुः । नौ सप्तदिवसानि निरुपद्रवा अगमत् । ततः अकालवातं उदपादि । नाव्या चतुरान् मासान् प्रकृतिसमुद्रपृष्ठे विचर्य क्षुरमालसमुद्रे नाम प्राप्ताः । तत्र मत्स्याः मनुष्यसमानशरीरा क्षुरनासा उदके उन्मज्जनं निमज्जनं कुर्वन्ति । वणिजः तान् दृष्ट्वा महासत्त्वं तस्य समुद्रस्य नाम पृच्छतः प्रथमां गाथामवोचन् ।

'उन्मज्जन्ति निमज्जन्ति मनुष्याः क्षुरनासिकाः ।
शूर्पारकं त्वां पृच्छामः समुद्रः कतमोऽयम्' इति ॥

एवं तैः पृष्टो महासत्त्वः आत्मनो निर्यामकसूत्रेण संस्यन्दय्य द्वितीयां गाथामाह—

'भरुकच्छात् प्रयातानां वणिजां धनैषिणाम् ।
नावा विप्रणष्टया क्षुरमालीपि उच्यते' इति ॥

तस्मिन् पुनः समुद्रे वज्रमुत्पद्यते । महासत्त्वः "स चाहं 'अयं वज्रसमुद्र' इति एवं एतेषां कथयिष्यामि लोभेन बहु वज्रं गृहीत्वा नावं अवसादयिष्यन्ति" इति तेषां अनाचक्ष्यैव नावं लगयित्वा उपायेन एकं योक्त्र गृहीत्वा मत्स्यग्रहणनियमेन जालं क्षेपयित्वा वज्र-

दायो नहापितदायो, नहापितस्य जातको भविस्सति, किं मे एवरूपेन राजुपट्ठानेन, अत्तनो वसनट्ठानमेव गमिस्सामी'ति सो भरुकच्छ-पट्टनमेव पच्चागमि। तस्मिं तत्थ वसन्ते वाणिजा नावं सज्जेत्वा 'कं नियामकं करिस्सामा'ति मन्तेता 'सुपारकपण्डितेन आरू-ल्हनावा न व्यापज्जति, एस पण्डितो उपायकुसला अन्धो समानोपि सुप्पारकपण्डितोव उत्तमो'ति तं उपसंकमित्वा निय्यामको नो होहा'ति वत्वा, 'ताता, अहं अन्धो, कथं निय्यामककम्मं करिस्सा-मा'ति वुत्ते 'सामि, अन्धापि तुम्हे येव अम्हाकं उत्तमो'ति पुनप्पुन याचियमानो 'साधु ताता, तुम्हेहि आरोचितसञ्ञाय निय्यामको भविस्सामी'ति तेसं नाव अभिरूहि। ते नावाय महासमुद्दं पक्खन्दिसु। नावा सत्त दिवसानि निरुपद्दवा अगमासि, ततो अकालवातं उपज्जि, नावा चत्तारो मासे पकतिसमुद्दपिट्ठे विचरित्वा खुरमालसमुद्दं नाम पत्ता, तत्थ मच्छा मनुस्ससमानसरीरा खुरनासा उदके उम्मुज्जनिमुज्जं करोन्ति। वाणिजा ते दिस्वा महासत्तं तस्स समुद्दस्स नामं पुच्छन्ता पठम गाथमाहंसु—

'उम्मुज्जन्ति निमुज्जन्ति मनुस्सा खुरनासिका।
सुप्पारकं तं पुच्छाम, सद्दा कतमो अय'न्ति॥

एवं तेहि पुट्ठा महासत्तो अत्तनो निय्यामकसुत्तेन संसन्देत्वा दुतियं गाथमाह—

'भरुकच्छा पयातानं वाणिजान धनेसिनं।
नावाय विप्पनट्ठाय खुरमालीति वुच्चती'ति॥

तस्मिं पन समुद्दे वजिरं उप्पज्जति। महासत्ता "सचाहं अयं वजिरसमुद्दो'ति एवं एतेसं कथेस्सामि लोभेन वहुं वजिरं गण्हित्वा नावं ओसीदापेत्सन्ती"ति तेसं अनाचिक्खित्वाव नावं लग्गापेत्वा उपायेनेकं योत्तं गहेत्वा मच्छगहणनियामेन जालं खिपापेत्या वजिर-

सारमुद्धृत्य नावि प्रक्षिप्य अन्यं अल्पार्घभाण्डं अचच्छर्दत्। नावा तं समुद्रमतिक्रम्य परतः अग्निमालं नाम गताः। स प्रज्वलिताग्निस्कन्ध इव माध्याह्निकसूर्य इव च अवभासं मुञ्चन् अस्थात्। वणिजः—

'यथा अग्निरिव सूर्य इव समुद्रः प्रतिपृश्यते।
शूर्पारकं त्वां पृच्छामः समुद्रः कतमोऽयम्' इति॥

गाथया तं अप्राक्षुः। महासत्त्वोऽपि तेषामनन्तरगाथया अचकथत्—

'भरुकच्छात् प्रयातानां वणिजां धनैषिणाम्।
नावा विप्रणष्टया अग्निमालिती उच्येते' इति॥

तस्मिन् पुनः समुद्रे सुवर्णमुत्सन्नमभूत्। महासत्त्वः पूर्वनयेनैव ततोऽपि सुवर्णं ग्राहयित्वा नावि प्राक्षैप्सीत्। नावा तमपि समुद्रमतिक्रम्य क्षीरमिव दधि इव अवभासमानं दधिमालं नाम समुद्रं प्रापन्। वाणिजः—

'यथा दधीव क्षीरमिव समुद्रः प्रतिदृश्यते।
शूर्पारकं त्वां पृच्छामः समुद्रः कतमोऽयम्' इति॥

गाथया तस्यापि नामाप्राक्षुः। महासत्त्वोऽनन्तरागाथया आचक्षत्—

'भरुकच्छात् प्रयातानां वणिजां धनैपिणाम्।
नावा विप्रणष्टया दधिमालीति उच्यते' इति॥

तस्मिन् पुनः समुद्रे रजतं उत्सन्नम्। स तमपि उपायेन ग्राहयित्वा नावि प्राचिक्षिपत्। नावा तमपि समुद्रमतिक्रम्य नीलकुशतृणमिव सम्पन्नसस्यमिव च अवभासमानं नीलवर्णं कुशमालं नाम समुद्रं प्रापन्, वणिजः—

'यथा कुश इव शस्यमिव समुद्रः प्रतिदृश्यते।
शूर्पारकं त्वां पृच्छामः समुद्रः कतमोऽयम्' इति॥

सारं उद्धरित्वा नावाय पक्खिपित्वा अञ्ञं अप्पग्घभण्डं छड्डापेसि। नावा तं समुद्दं अतिक्कमित्वा परतो अग्गिमालं नाम गता। सो पज्जलितअग्गिक्खन्धो विय, मज्झन्हिकसुरियो विय, च ओभासं मुञ्चन्तो अट्ठासि। वाणिजा—

'यथा अग्गीव सुरियोव समुद्दो पतिदिस्सति।
सुप्पारकं तं पुच्छाम, समुद्दो कतमो अयन्'ति॥

गाथाय तं पुच्छिंसु। महासत्तोपि तेसं अनन्तरगाथाय कथेसि—

'भरुकच्छा पयातानं वाणिजानं धनेसिनं।
नावाय विप्पनट्ठाय अग्गिमालीति वुच्चती'ति॥

तस्मिं पन समुद्दे सुवण्णं उस्सन्नं अहोसि। महासत्तो पुरिमनयेनेव ततोपि सुवण्णं गाहापेत्वा नावाय पक्खिपि। नावा तम्पि समुद्दं अतिक्कमित्वा खीरं विय दधिं विय च ओभासन्तं दधिमालं नाम समुद्दं पापुणि। वाणिजा—

'यथा दधिं व खीरं व समुद्दो पतिदिस्सति।
सुप्पारकं तं पुच्छाम, समुद्दो कतमो अयन्'ति॥

गाथाय तस्सापि नामं पुच्छिंसु। सोपि अनन्तरगाथाय आचिक्खि—

'भरुकच्छा पयातानं वाणिजानं धनेसिनं।
नावाय विप्पनट्ठाय दधिमालीति वुच्चती'ति॥

तस्मिं पन समुद्दे रजतं उस्सन्नं। सो तम्पि उपायेन गाहापेत्वा नावाय पक्खिपापेसि। नावा तम्पि समुद्दं अतिक्कमित्वा नीलकुसतिणं विय सम्पन्नसस्सं विय च ओभासमानं नीलवण्णं कुसमालं नाम समुद्दं पापुणि। वाणिजा—

'यथा कुसोव सस्सोव समुद्दो पतिदिस्सति।
सुप्पारकं तं पुच्छाम, समुद्दो कतमो अयन्'ति॥

गाथया तस्याऽपि नाम अप्राक्षुः । स अनन्तरगाथया आचक्षत्—

'भरुकच्छात् प्रयातानां वणिजां धनैषिणाम् ।
नावा विप्रणष्टया कुशमालीति उच्यते' इति ॥

तस्मिन् पुनः समुद्रे नीलमणिरत्नं उत्सन्नमभूत । स तमपि उपायेन ग्राहयित्वा नावि प्राक्षिक्षिपत् । नावा तमपि समुद्रं अतिक्रम्य नलवनमिव च वेणुवनमिव च ख्यायमानं नलमालं नाम समुद्रं प्रापन् । वणिजः—

'यथा नल इव वेणुरिव समुद्रः प्रतिदृश्यते ।
शूर्पारकं त्वां पृच्छामः समुद्रः कतमोऽयम्' इति ॥

गाथया तस्यापि नाम अप्राक्षुः । महासत्त्वः अनन्तरगाथयाऽचकथत्—

'भरुकच्छात् प्रयातानां वणिजां धनैषिणाम् ।
नावा विप्रणष्टया नलमालीति उच्यते' इति ॥

तस्मिन् पुनः समुद्रे वंशरागवैदूर्यमुत्सन्नम् । स तमपि ग्राहयित्वा नावि प्राक्षिक्षिपत् । वणिजः नलमालिमतिक्रमन्तः बडवामुख-समुद्रं नाम अद्राक्षिपुः । तत्र उदक कृष्ट्वा कृष्ट्वा सर्वतोभागेन उद्गच्छति । तस्मिन् सर्वतोभागेन उद्गतोदकं सर्वतोभागेन छिन्नतट-महाश्वभ्र इव प्रज्ञायते । ऊर्म्यामुद्गतायां एकतः प्रपातसदृशं भवन्ति; भयजननः शब्दः उत्पद्यते स्रोतांसि भिन्दन्निव हृदयं फालयन्निव । तं दृष्ट्वा वणिजः भीतत्रस्ताः—

'महाभयो भीषणकः शब्दः श्रूयतेऽमानुषः ।
यथा श्वभ्रः प्रतातश्च समुद्रः प्रतिदृश्यते ।
शूर्पारकं त्वां पृच्छामः समुद्रः कतमोऽयम्' इति ।

गाथया तस्य नाम अप्राक्षुः ।

गाथाय तस्सपि नामं पुच्छिसु। सो अनन्तरगाथाय आचिक्खि—

'भरुकच्छा पयातानं वाणिजानं धनेसिनं।
नावाय विप्पनट्ठाय कुसमालीति वुच्चती'ति ॥

तस्मिं पन समुद्दे नीलमणिरतनं उस्सनं अहोसि। सो तम्पि उपायेन गाहापेत्वा नावाय पक्खिपापेसि। नावा तम्पि समुद्दं अतिक्कमित्वा नलवनं विय च वेलुवनं विय च खायमानं नलमालं नाम समुद्दं पापुणि। वणिजा—

यथा नलोव वेलुव समुद्दो पतिदिस्सति।
सुप्पारकं तं पुच्छाम, समुद्दो कतमो अय'न्ति ॥

गाथाय तस्सपि नामं पुच्छिसु। महासत्तो अनन्तरगाथाय कथेसि—

'भरुकच्छा पयातानं वाणिजानं धनेसिनं।
नावाय विप्पनट्ठाय नलमालीति वुच्चती'ति ॥

तस्मिं पन समुद्दे वंसरागवेलुरियं उस्सन्नं। सो तम्पि गाहापेत्वा नावाय पक्खिपापेसि। वाणिजा नलमालिं अतिक्कमन्ता वलभामुख-समुद्दं नाम पस्सिसु। तत्थ उदकं कड्ढित्वा कड्ढित्वा सब्बतोभागेन-उग्गच्छति। तस्मिं सब्बतोभागेन उग्गतोदकं, सब्बतो भागेन छिन्नतट-महासोब्भो विय पञ्ञायति, ऊमिया उग्गताय एकतो पपातसदिसं होति, भयजननो सद्दो उप्पज्जति सोतानि भिन्दन्तो विय हदयं फालेन्तो विय। तं दिस्वा वाणिजा भीततसिता—

'महाभयो भिंसनको सद्दो सुय्यतमानुसो।
यथा सोब्भो पपातो व समुद्दो पतिदिस्सति।
सुप्पारकं तं पुच्छाम, समुद्दो कतमो अय'न्ति ॥

गाथाय तस्स नामं पुच्छिसु।

'भरुकच्छात् प्रयातानां वणिजां धनैषिणाम् ।
नावा विप्रणष्टया बडवामुखीति उच्यते' इति ॥

बोधिसत्त्वः अनन्तरगाथया तस्य नाम आचक्ष्य 'ताताः ! इमं बडवामुखं समुद्रं प्राप्ता निवर्तितुं समर्था नौर्नाम नास्ति । अथ सम्प्राप्तनावं निमज्जय्य विनाशं प्रापयति' इत्याह । तां च नावं सप्तमनुष्यशतानि अभ्यरुक्षन् । ते सर्वे मरणभयभीताः एकप्रहारेणैव अवीच्यां पच्यमानानि सत्त्वानि इव अतिकरुणस्वरं अमुमुञ्चन् । महासत्त्वः 'स्थापयित्वा मां अन्यः एतेषां स्वस्तिभावं कर्तुं समर्थो नाम नास्ति । सत्यक्रियया तेषां स्वस्ति करिष्यामि इति चिन्तयित्वा तान् आमन्त्र्य 'ताताः मां क्षिप्रं गन्धोदकेन स्नापयित्वा अहतवस्त्राणि निवास्य पुण्यपात्रीं सज्जयित्वा नाव्या धुरि स्थापयत' इति । ते वेगेन तथा अकार्षुः । महासत्त्वः उभाभ्यां हस्ताभ्यां पुण्यपात्रीं गृहीत्वा नाव्या धुरि स्थितो सत्यक्रियां कुर्वन् अवसानगाथामाह—

'यतः सरामि आत्मनं यतः प्राप्तोऽस्मि विज्ञताम् ।
नाभिजानामि सञ्चिन्त्य एकप्राणमपि हिंसितम् ।
एतेन सत्यवज्रेण स्वस्ति नौर्निवतताम्' इति ॥

चतुरान् मासान् विदेशं प्रक्रान्ता नौर्निवृत्य ऋद्धिमतीव श्रद्धानुभावेन एकदिवसेनेव भरुकच्छपत्तनं अनमत् । गत्वा च पुनः स्थलेऽपि अष्टोषभमात्रा स्थानं प्रस्कन्द्य नाविकस्य गृहद्वारे अस्थात् । महासत्त्वस्तेषां वणिजां सुवर्ण रजत-मणि-प्रवाल-वज्राणि भाजयित्वा अदात् । 'इयद्भिः वो रत्नैः अलम् । मा पुनः समुद्रं प्रविशत' इति च तेषां अववादं दत्वा यावज्जीव दानादीनि पुण्यानि कृत्वा देवपुरं अपूपूरयत् ।

[ शास्तेदं धर्मदेशनमाहृत्य 'एवं भिक्षवः ! तथागतो महाप्रज्ञ एव' इत्युक्त्वा जातकं समवादीधपत् । 'तदा परिषत् बुद्धपरिषत् शूर्पारकपण्डितः पुनरहमेव' इति ]

इति शूर्पारकजातकम् ।

'भरुकच्छा पयातानं वाणिजानं धनेसिनं ।
नावाय विप्पनट्ठाय वलभामुखी ति वुच्चती'ति ॥

बोधिसत्तो अनन्तरगाथाय तस्स नामं आचिक्खित्वा 'ताता, इमं वलभामुखं समुद्दं पत्ता निवत्तितुं समत्था नावा नाम नत्थि। अयं सम्पत्तनावं निमुज्जापेत्वा विनासं पापेती'ति आह । तञ्च नावं सत्तमनुस्ससतानि अभिरूहिंसु। ते सब्बे मरणभयभीता एकप्पहारेनेव अवीचिम्हि पच्चमाना सत्ता विय अतिकरुणरं मुञ्चिंसु। महासत्तो ठपेत्वा मं अञ्ञो एतेसं सोत्थिभावं कातुं समत्थो नाम नत्थि, सच्चकिरियाय तेसं सोत्थि करिस्सामी'ति चिन्तेत्वा ते आमन्तेत्वा 'तात, मं खिप्पं गन्धोदकेन नहापेत्वा अहतवत्थानि निवासापेत्वा पुण्णपाति सज्जेत्वा नावाय धुरे ठपेथा'ति । ते वेगेन तथा करिंसु महासत्तो उभोहि हत्थेहि पुण्णपातिं गहेत्वा नावाय धुरे ठितो सच्चकिरियं करोन्तो ओसं नगाथमाह—

'यतो सरामि अत्तानं यतो पत्तोस्मि विञ्ञुतं ।
नाभिजानामि संचिच्च एकपाणम्हि हिंसितं ।
एतेन सच्चवज्जेन सोत्थिं नावा निवत्ततू'ति ॥

चत्तारो मासे विदेसं पक्खन्ता नावा निवत्तित्वा इद्धिमा विय इद्धानुभावेन एकदिवसेनेव भरुकच्छपट्टनं अगमासि, गन्त्वा च पन थलेपि अट्ठूसभमत्तं ठानं पक्खन्दित्वा नाविकस्स घरद्वारे अट्ठासि। महासत्तो तेसं वाणिजानं सुवण्णरजतमणिप्पवालवजिरानि भाजेत्वा अदासि। 'एत्तकेहि वो रतनेहि अलं, मा पुन समुद्दं पविसित्था'ति च तेसं ओवादं दत्वा यावजीवं दानादीनि पुञ्ञानि कत्वा देवपुरं पूरेसि ।

[ सत्था इदं धम्मदेसनं आहरित्वा 'एवं भिक्खवे ! पुब्बेपि तथागतो महापञ्ञो येवा'ति वत्वा जातकं समोधानेसि । 'तदा परिसा बुद्धपरिसा, सुप्पारकपण्डितो पन अहमेवा'ति । ] सुप्पारजातकं ।

## (१५) शीलानिशंस-जातकम्

[ इद शास्ता जैत्रवने विहरन् एकं श्रद्धमुपासकमारभ्याऽचकथत् ।…'न खलु उपासक ! त्वमेव बुद्धगुणान् अनुस्मृत्य प्रतिष्ठा लब्धः, पूर्वमपि उपासकाः समुद्रमध्ये नावि भिन्नायां बुद्धगुणान् अनुस्मरन्तः प्रतिष्ठामालम्भिसयत' इत्युक्त्वा तेन याचितोऽतीतमहार्षीत् ।

अतीते काश्यपसम्यक्सम्बुद्धकाले स्रोतापन्नः आर्यश्रावकः एकेन नापितकुटुम्बिके सार्द्धं नावमध्यरुक्षत् । तस्य नापितस्य भार्या 'आर्य ! अस्य सुखदुःखं तव भारः' इति नापितं तस्योपासकस्य हस्ते न्यक्षैप्सीत् । अथ सा नौः सप्तमे दिवसे समुद्रमध्ये भिन्ना । तावपि द्वौ जनौ एकस्मिन् फलके निपन्नौ एकं द्विपकं प्रापन् । तत्र स नापितः शकुनान् मारयित्वा पक्त्वा खादन् उपासकायापि ददति । उपासकः 'अलं मम' इति न खादति । सोऽचिचिन्तत् 'अस्मिन् स्थाने अस्माकं, स्थापयित्वा त्रीणि शरणानि, अन्या प्रतिष्ठा नाऽस्ति' इति स त्रयाणांरत्ननां गुणान् अन्वस्मार्षीत् । अथास्य अनुस्मरतः, तस्मिन् द्वीपके निर्वृत्तो नागराजः आत्मनः शरीर महानावं कृत्वा अमीमपत् समुद्रदेवता निर्यामकोऽभूत् । नौः सप्तभिः रत्नैरपूपुरत । त्रयः कूपका इन्द्रनीलमणिमया अभूवन्, सुवर्णमयोऽलङ्कारः, रजतमयानि योक्त्राणि, सुवर्णमयानि प्रदगाणि । समुद्रदेवता नावि स्थित्वा 'सन्ति जम्बुद्वीपगामिकाः' इत्यघोषीत् । उपासकः 'वयं गमिष्यामः' इत्याह । 'तेन हि एहि, नावमभिरोह' इति । स नावमभिरुह्य नापित प्राक्रोशीत् । समुद्रदेवता 'तवैव लभ्यते नैतस्य' इत्याह । 'किं कारणात्' इति । एतस्य शीलगुणाचारो नाऽति । तत् कारणम् । अहं हि तव नावमाहार्षं, नैतस्य' इति । 'भवतु' अहं आत्मनो दत्तदानानि रक्षितशीलानि भावितभावनया एतस्मै प्राप्तिं दद्मि' इति । नापितः 'अनुमोदामि स्वामिन् !' इत्याह । देवता 'इदानीं ग्रहीष्यामि' इति तमपि

## ( १५ ) सीलानिसंसजातकं

[ इदं सत्था जेतवने विहरन्तो एकं सद्धं उपासकं आरब्भ कथेसि ।…'न खो उपासक ! त्वञ्ञेव बुद्धगुणे अनुस्सरित्वा पतिट्ठं लद्धो, पुब्बेपि उपासका समुद्दमज्झे नावाय भिन्नाय बुद्धगुणे अनुसरन्ता पतिट्ठं लभिंसु'ति वत्वा तेन याचितो अतीतं आहरि ।]

अतीते कस्सपसम्मासम्बुद्धकाले सोतापन्नो अरियसावको एकेन नहापितकुटुम्बिकेन सद्धिं नावं अभिरुहि । तस्स नहापितस्स भरिया 'अय्य, इमस्स सुखदुक्खं तव भारो'ति नहापितं तस्स उपासकस्स हत्थे निक्खिपि । अथ सा नावा सत्तमे दिवसे समुद्दमज्झे भिन्ना । तेपि द्वे जना एकस्मिं फलके निपन्ना-एकं दीपं पापुणिंसु । तत्थ सो नहापितो सकुणे मारेत्वा पचित्वा खादन्तो उपासकस्सापि देति । उपासको 'अलं मय्ह'न्ति न खादति । सो चिन्तेसि 'इमस्मिं ठाने अम्हाकं, ठपेत्वा तीणि सरणानि, अञ्ञा पतिट्ठा नत्थी'ति सो तिण्णं रतनानं गुणे अनुस्सरि । अथस्स अनुस्सरन्तस्स, तस्मिं दीपके निब्बत्तो नागराजा अत्तनो सरीरं महानावं कत्वा मापेसि । समुद्ददेवता निय्यामको अहोसि । नावा सत्तहि रतनेहि पूरयित्थ । तयो कूपका इन्दनीलमणिमया अहेसुं, सोवण्णमयो लंकारो, रजतमयानि योत्तानि, सुवण्णमयानि पदरानि । समुद्ददेवता नावाय ठत्वा 'अत्थि जम्बुदीपगामिका'ति घोसेसि । उपासको 'मयं गमिस्सामा'ति आह । 'तेन हि एहि, नावं अभिरुहा'ति । सो नावं अभिरुहित्वा नहापितं पक्कोसि । समुद्ददेवता 'तुय्हं येव लब्भति न एतस्सा'ति आह । 'किं कारणा'ति । 'एतस्स सीलगुणाचारो नत्थि, तं कारणं, अहं हि तुय्हं नावं आहरिं न एतस्सा'ति । 'होतु, अहं अत्तना दिन्नदाने रक्खितसीले भावितभावनाय एतस्स पत्तिं दम्मा'ति । नहापितो 'अनुमोदामि सामी'ति आह । देवता 'इमानि गण्हिस्सामी'ति तम्पि

आरोप्य उभावपि जनौ समुद्रात् निष्क्रम्य नद्या वाराणसीं गत्वा आत्मनोऽनुभावेन द्वितयमपि तेषां गृहे धनं प्रतिष्ठाप्य 'पण्डितेनैव सार्द्धं संसर्गो नाम कर्तव्य इति चेद् हि अस्य नापितस्य अनेनोपासकेन सार्द्धं संसर्गो नाभविष्यत् समुद्रमध्ये एवानशिष्यत्' इति पण्डितसंसर्गस्य गुणं कथयन्ती इमे गाथे अवोचत्—

पश्य श्रद्धायाः शीलस्य त्यागस्य च इदं फलम् ।
नागो नापो वर्णेन श्रद्धं वहति उपासकम् ॥
सद्भिरेव समासीत सद्भि कुर्वीत संस्तवम् ।
सतां हि संनिवासेन स्वस्ति छच्छति नापितः' ॥ इति

एव समुद्रदेवता आकाशे स्थित्वा धर्मं दिष्ट्वा अवोद्य नागराज गृहीत्वा आत्मनो विमानमेवाऽगमत् ।

[ शास्तेदं धर्मदेशनमाहृत्य सत्यं प्रकाश्य जातकं समवादीघपत् ।'''तदा स्रोतापन्नोपासकः परिनिर्वायी, नागराजः शारिपुत्रः अभूत, समुद्रदेवता अहमेव' इति । ]

इति शीलानिशंसजातकम्

●

## (१६) चर्मशाटक-जातकम् ।

[ इदं शास्ता जैत्रवने विहरन् चर्मशाटकं नाम परिव्राजकराभ्याऽचकथत् । स एकदिवसे'''एणकानां योधनस्थाने संप्रापत् । एणकस्तं दृष्ट्वा प्रहर्तुकामोऽपाशकत् । परिव्राजकः 'एष मह्यमपचितिं दर्शयति' इति न प्रत्यक्रमीत् । एणको वेगेनागत्य तमूरौ प्रहृत्यापीपतत् ।''भिक्षवो धर्मसभायां कथां समुदतिष्ठिपन् ।'' शास्ताऽऽगत्य 'कस्यां नुस्य भिक्षवः एतर्हि कथायां संनिषण्णाः' इति पृष्ट्वा 'अस्या नाम' इत्युक्ते 'न भिक्षवः ! इदानीमेव पूर्वमप्येष असतग्रहं कृत्वा विनाशं प्राप्तः इत्युक्त्वाऽतीतमाहार्षीत् । ]

अतीते वाराणस्यां ब्रह्मदत्ते राज्यं कुर्वति बोधिसत्त्वः एकस्मिन् वणिक्कुले निर्वृत्य वाणिज्यं करोति । तदा एकः चर्मशाकः

आरोपेत्वा उभोपि जने समुद्दा निक्खमित्वा नदिया वाराणसिं गन्त्वा अत्ततो आनुभावेन द्विन्नम्पि तेसं गेहे धनं पतिट्ठापेत्वा 'पण्डितेहेव सद्धिं संसग्गो नाम कातब्बोति, सचे हि इमस्स नहापितस्स इमिना उपासकेन सद्धिं संसग्गो न भविस्स समुद्दमज्झे येव नस्सिस्सा'ति पण्डितसंसग्गस्स गुणं कथयमाना इमा गाथा अवोच—

पस्स सद्धाय सीलस्स चागस्स च अयं फलं ।
नागो नावाय वण्णेन सद्ध वहति उपासकं ॥ १ ॥
सब्भिरेव समासेथ, सब्भि कुब्बेथ सन्थवं ।
सतं हि सन्निवासेन सोत्थिं गच्छति नहापितो'ति ॥ २ ॥

एवं समुद्ददेवता आकासे ठत्वा धम्मं देसेत्वा ओवदित्वा नागराजानं गण्हित्वा अत्तनो विमानमेव अगमासि ।

[ सत्था इमं धम्मदेसनं आहरित्वा सच्चं पकासेत्वा जातकं समोधानेसि । ...'तदा सोतापन्नो उपासको परिनिब्बायि, नागराजा सारिपुत्तो अहोसि, समुद्ददेवता अहमेवा'ति । ] सीलानिसंसजातकं ।

●

## ( १६ ) चम्मसाटकजातकं

[ इदं सत्था जेतवने विहरन्तो चम्मसाटकं नाम परिब्बजाकमारब्भ कथेसि । सो एकदिवसं...एलाकानं युज्झनट्ठानं संपापुणि । एलकोति तं दस्वा पहरितुकामो ओसक्कि । परिब्बाजको 'एस मय्हं अपचितिं दस्सेदी'ति न पटिक्कमि । एलको वेगेनागन्त्वा तं थरुम्हि पहरित्वा पातेहि ।...भिक्खू धम्मसभायं कथं समुट्ठापेसुं ...सत्था आगन्त्वा 'काय नुत्थ भिक्खवे ! एतरहि कथाय संनिसिन्ना'ति पुच्छित्वा 'इमाय नामा'ति वुत्ते 'न भिक्खवे इदानेव पुब्बे पेस असन्तपग्गहं कत्वा विनासं पत्तो'ति वत्वा अतीतं आहरि । ]

अतीते वाराणसियं ब्रह्मदत्ते रज्जं कारेन्ते बोधिसत्तो एकस्मिं वाणिजकुले निब्बत्तित्वा वणिज्जं करोति । तदा एको चम्मसाटको

परिव्राजकः वाराणस्या भिक्षायां चरन् एणकानां योधनस्थानं प्राप्य एणकं अपसंक्रान्तं दृष्ट्वा 'अपचितिं मे करोति' इति संज्ञाय अप्रतिक्रम्य 'एषां एतावतां मनुष्याणां अन्तरे अयं एकः एणकः अस्माकं गुणं जानाति' इति तस्य अञ्जलिं प्रगृह्य स्थितः प्रथमां गाथामाह—

'कल्याणरूपो वत यं चतुष्पदः सुभद्रकः चैव सुपेशलश्च ।
यो ब्राह्मणं जातिमन्त्रोपपन्नं अपचिनोति मेण्डवरो यशस्वी'इति ॥

तस्मिन् क्षणे आपणे निषण्णः पण्डितवणिक् तं परिव्राजकं निषेधन् द्वितीयां गाथामाह—

'मा ब्राह्मण ! इतरदर्शनेन विश्वासं पत्थाः चतुष्पदस्य ।
दृढप्रहारं अभिकांक्षन् अपशक्यते दर्शयते सुप्रहारम्' इति ॥

तस्य पुनः पण्डितवणिजः कथयतः एव मेण्डको वेगेनागत्य उरौ प्रहृत्य तत्रैवं वेदनामात्रं कृत्वा अपीपतत् । स परिदेवयन् न्यपादि । शास्ता तत्कारणं प्रकाशयन् तृतीयां गाथामाह—

'अस्थिभंग्नं वर्तितः खारिभारः
　　सर्वं भाण्डं ब्राह्मणस्येह भिन्नम् ।
उाष्पान् प्रगृह्य क्रदन्ति
　　अभिधावत हन्यते ब्रह्मचारी' ॥ इति

चतुर्थीं गाथां परिव्राजकः आह—

'एवं स निहतः शेते यो अपूज्यं नमस्यति ।
यथाहमद्य प्रहृतः हतो मेण्डेन दुर्मतिः' ॥

इति स परिदेवमानः तत्रैव जीवितक्षयं प्राप्तः, इति ॥

[ 'शास्ता इदं धर्मदेशनमाहृत्य जातकं समवादीघपत् । तदा चर्म्मशाटकः एतर्हि चर्म्मशाटक एव, पण्डितवणिक् पुनरहमेव' इति । ]

इति चर्म्मशाटकजातकम् ।

परिब्बाजको वाराणसियं भिक्खाय चरन्तो एलकानं युज्झनटठानं पत्वा एलकं ओसक्कन्तं दिस्वा 'अपचितिं मे करोती'ति सञ्ञाय अपटिक्कमित्वा 'इमेसं एत्तकानं मनुस्सानं अन्तरे अयं एको एलको अम्हा गुणं जानाती'ति तस्स अञ्जलिं पग्गण्हित्वा ठितो पठमं गाथमाह—

कल्याणरूपो वत यं चतुप्पदो सुभद्दको चेव सुपेसलो च।
यो ब्राह्मणं जातिमन्तूपपन्नं अपचायती मेण्डवरो यसस्सीति ॥

तस्मिं खणे आपणे निसिन्नो पण्डितवाणिजो तं परिब्बाजकं निसेधेन्तो दुतियं गाथमाह—

'मा ब्राह्मण ! इत्तरदस्सनेन विस्सासमापज्जि चतुप्पदस्स।
दल्हप्पहारं अभिकंखमानो अवसक्कती दस्सति सुप्पहर' न्ति ॥

तस्स पन पण्डितवाणिजस्स कथेन्तस्सेव मेण्डको वेगेनागन्त्वा उरुम्हि पहरित्वा तत्थेव वेदनामत्तं कत्वा पातेसि । सो परिदेवमानो निपज्जि । सत्था तं कारणं पकासेन्तो ततियं गाथमाह—

'सत्थि भग्गा, वट्टितो खारिभारो,
सब्बं भण्डं ब्राह्मणस्सीध भिन्नं।
बाहा पग्गय्ह कन्दति
अभिधावथ, हञ्ञते ब्रह्मचारी'ति ॥

चतुत्थं गाथं परिब्बाजको आह—

'एवं सो निहतो सेति यो अपुज्जं नमस्सति।
यथाहमज्ज पहतो हतो मेण्डेन दुम्मती'ति ॥

इति सो परिदेवन्तो तत्थेव जीवितक्खयं पत्तो'ति ।

[ 'सत्था इमं धम्मदेसनं आहरित्वा जातकं समोधानेसि । तदा चम्मसाटको एतरहि चम्मसाटकोव, पण्डित, पण्डितवाणिजो पन अहमेवा'ति ]

चम्मसाटकजातकं ।



## ( १७ ) उत्सङ्ग-जातकम् ।

[ इद शास्ता जैत्रवने विहरन् अन्यतरां जनपदस्त्रियमारभ्याऽचकथत् । एकस्मिन् हि समये कोसलराष्ट्रे त्रयो जना अन्यतरस्मिन् अटवीमुखे कर्षन्ति । तस्मिन् समये अन्तोऽटविचोरा मनुष्यान् विलुप्य पलायिषत । तांश्चोरान् पर्येष्य अपश्यन्तस्तत् स्थानमागत्य 'यूयमटव्यां विलुप्य इदानीं कर्षका इव भवथ' इति तान् 'चोरा इमे' इति बद्ध्वा आनीय कोशलराजायाहुः । अथैका स्त्री आगन्य 'आच्छादनं मे दत्त, आच्छादनं मे दत्त'' इति परिदेवमाना पुनः पुनः राज-निवेशनं परियाति । राजा तस्याः शब्दं श्रुत्वा देह्यस्यै आच्छादनम्' इत्याह ।... 'न किलैषा इदमाच्छादनं कथयति, स्वामिकाच्छादनं कथयति' इति । अथैना राजा प्रक्रोश्य 'त्वं किल स्वामिकाच्छादनं याचसे' इत्यप्राक्षीत् । 'आं देव !'... 'ते त्रयो जनाः किं भवन्ति' इत्यप्राक्षीत् । 'एको मे देव ! स्वामिकः, एको भ्राता, एकः पुत्रः' इति । राजा 'अहं ते तुष्टः, एषु त्रिषु एकं दद्मि, कतमं इच्छसि' इत्य-प्राक्षीत् ? सा आह'''भ्रातरं मे देहि देव !' इति । राजा तुष्ट्वा त्रीनपि व्यश्रक्षीत् ।'''शास्ता''''न भिक्षवः ! एषा श्री इदानीमेव तान् त्रीन् जनान् दुःखादमूमुचत्, पूर्वमप्यमूमुचदेव' इत्युक्त्वाऽतीतमाहार्षीत् । ]

अतीते वाराणस्यां ब्रह्मदत्ते राज्यं कुर्वति त्रयो जना अटवी-मुखे कर्षन्तीति सर्वं पूर्वसदृशमेव । तथा पुनः राज्ञा 'त्रिषु जनेषु कं इच्छसि' इति उक्ता सा आह—'त्रीनपि दातुं न शक्नुथ देव !' इति । 'आम् न शक्नोमि' इति । 'चेत् त्रीन् दातुं न शक्नुथ, भ्रातरं मे देहि' इति । 'पुत्रकं वा स्वामिकं वा गृहाण, किं ते भ्राता' इति च उक्ता 'एते नाम देव सुलभाः, भ्राता पुन-र्दुर्लभः' इति उक्त्वा इमां गाथामाह—

उत्सङ्गे देव ! मे पुत्रः पथि धावन्त्यराः पतिः ।
तञ्च देशं न पश्यामि यतः सोदर्यमानये ॥ इति

राजा 'सत्यमेषा वदति' इति तुष्टचित्तः त्रीनपि जनान् बन्धना-

## १७. उच्छङ्गजातकं

[ इदं सत्था जेतवने विहरन्तो अञ्ञतरं जानपदित्थिं आरब्भ कथेसि । एकस्मिं हि समये कोसलरट्ठे तयो जना अञ्ञतरस्मिं अटविमुखे कसन्ति । तस्मिं समये अन्तो अटवियं चोरा मनुस्से विलुम्पित्वा पलायिंसु । ते चोरा परियेसित्वा अपस्सन्ता तं ठानं आगन्त्वा 'तुम्हे अटवियं विलुम्पित्वा इदानि कस्सका विय होथा'ति ते 'चोरा इमे'ति बन्धित्वा आनेत्वा कोसलरञ्ञो अदंसु । अथेका इत्थी आगन्त्वा 'अच्छादनम्मे देथ, अच्छादनम्मे देथा'ति परिदेवन्ती पुनप्पुन राजनिवेसनं परियाति । राजा तस्सा सद्दं सुत्वा 'देहिमस्सा अच्छादन'न्ति आह ।…'न किरेसा इमं अच्छादनं कथेति सामिकच्छादनं कथेती'ति । अथ न राजा पक्कोसापेत्वा 'त्वं किर सामिकच्छादनं याचसी'ति पुच्छि । 'आम देव !'…'ते तयो जना किं होन्ती'ति पुच्छि । 'एको मे देव ! सामिको, एको माता, एको पुत्तो'ति । राजा अहं ते तुट्ठो इमेसु तीसु एकं देमि, कतमं इच्छसी'ति पुच्छि । सा आह…'मातरं मे देहि देवा'ति । राजा तुस्सित्वा तयोपि विसज्जेसि ।…सत्था…'न भिक्खवे ! एसा इत्थी इदानेव ते तयो जने दुक्खा मोचेसि पुब्बेपि मोचेसि येवा'ति वत्वा अतीतं आहरि । ]

अतीते बाराणसियं ब्रह्मदत्ते रज्जं कारेन्ते तयो जना अटविमुखे कसन्तीति सब्बं पुरिमसदिसमेव । तदा पन रञ्ञा तीसु जनेसु कं इच्छसी'ति वुत्ते सा आह 'तयोपि दातुं न सक्कोथ देवा'ति । 'आम न सक्कोमो'ति । 'सचे तयो दातुं न सक्कोथ भातरम्मे देथा'ति । 'पुत्तकं वा सामिकं वा गण्ह, किन्ते भातरा'ति च वुत्ता 'एते नाम देव सुलभा, भाता पन दुल्लभा'ति वत्वा इमं गाथमाह—

'उच्छङ्गे देव ! मे पुत्तो, पथे धावन्तिया पति ।
तञ्च देसं न पस्सामि यतो सोदरियमानये'ति ।

राजा 'सच्चं एसा वदती'ति तुट्ठचित्तो तयोपि जने बन्धना

गान्तो आनीय अदात् । सा त्रीनपि तान् गृहीत्वा गता ।

[ शास्ताऽपि 'न भिक्षवः ! इदानीमेव पूर्वमप्येषा इमान् त्रीन् जनान् दुःखादमूमुचदेव' इतीदं धर्मदेशनमाहृत्य अनुसन्धि घटयित्वा जातकं समवादीधपत् । अतीते चत्वारः एतर्हि चत्वार एव, राजा पुनरहं तस्मिन् समये, इति।

इत्युत्सङ्गजातकम् ।

---

## ( १८ ) वैदर्भ-जातकम्

[ इदं शास्ता जेतवने विहरन् दुर्वचं भिक्षुमारभ्याऽचकथत् । तं हि भिक्षुं शास्ता 'न त्वं भिक्षो ! इदानीमेव दुर्वचः, पूर्वमपि दुर्वच एव । तेनैव वचः कारणेन पण्डितानां वचनमकृत्वा तीक्ष्णेनासिना द्विधा कृत्वा छिन्नो भूत्वा मार्गे न्यपतः तं चैकर्ण निःश्रुत्य पुरुषसहस्रं जीवितक्षयं प्राप्तम्' इत्युक्त्वाऽतीतमाहार्षीत् । ]

अतीते वाराणस्यां ब्रह्मदत्ते राज्यं कुर्वति एकस्मिन् ग्रामके अन्यतमो ब्राह्मणो वैदर्भं नाम मन्त्रं जानाति । स किल मन्त्रोऽनर्घो महार्हः । नक्षत्रयोगे लब्धे तं मन्त्रं परिवर्त्य आकाशे उल्लोकिते आकाशतः सप्तरत्नवर्षं वर्षति । तदा बोधिसत्त्वः तस्य ब्राह्मणस्यान्तिके शिल्पमुद्गृह्णाति । अथैकदिवसे ब्राह्मणो बोधिसत्त्वमादाय केनचिदेव करणीयेन आत्मनो ग्रामात् निष्क्रम्य चेदिकराष्ट्रमगमत् । अन्तरामार्गे एकस्मिन् अरण्यस्थाने पञ्चशतं प्रेषणकचोरा नाम पथिघातं कुर्वन्ति । ते बोधिसत्वं च वैदर्भब्राह्मणं च अग्रहीषुः । कस्मात् पुनरेते प्रेषणकचोरा इत्युच्यते ? ते किल द्वौ जनौ गृहीत्वा एकं धनाहरणार्थाय प्रेषयन्ति, तस्मात् प्रेषणकचोरा ते एव उच्यन्ते । तेऽपि च पितापुत्रौ गृहीत्वा पितरं 'त्वमस्माकं धनमाहृत्य पुत्रं गृहीत्वा याहि' इति वदन्ति । एतेनोपायेन मातादुहितरौ गृहीत्वा मातरं विसर्जयन्ति । ज्येष्ठकनिष्ठौ गृहीत्वा ज्येष्ठकभ्रातृकं विसर्जयन्ति । आचार्यान्तेवासिकौ गृहीत्वा अन्तेवासिकं विसर्जयन्ति ।

गारतो आनेत्वा अदासि । सा तयोपि ते गहेत्वा गता ।

[ सत्थापि 'न भिक्खवे ! इदानेव पुब्बेपेसा इमे तयो जने दुक्खा मोचेसि येव 'ति इमं धम्मदेसनं आहरित्वा अनुसंधिं घटेत्वा जातकं समोधानेसि । अतीते चत्तारो एतरहि चत्तारोव, राजा पन अहं तेन समयेना'ति । ]

उच्छङ्गजातकं

---

## १८. वेदब्भजातकं

[ इदं सत्था जेतवने विहरन्तो दुब्बचं भिक्खुमारब्भं कथेसि । तं हि भिक्खुं सत्था 'न त्वं भिक्खु ! इदानेव दुब्बचो, पुब्बेपि दुब्बचो येव । तेनेव वचकारणेन पण्डितानं वचनं अकत्वा तिण्हेन असिना द्विधा कत्वा छिन्नो हुत्वा मग्गो निपतित्थ । तं च एककं निस्साय पुरिससहस्सं जीवितक्खयं पत्त'न्ति वत्वा अतीतं आहरि । ]

अतीते बाराणसियं ब्रह्मदत्ते रज्जं कारेन्ते एकस्मिं गामके अञ्ञतरो ब्राह्मणो वेदब्भं नाम मन्तं जानाति । सो किर मन्तो अनग्घो, महाग्घो । नक्खत्तयोगं लद्धे तं मन्तं परिवत्तेत्वा आकासे उल्लोकिते आकासतो सत्तरतनवस्सं वस्सति । तदा बोधिसत्तो तस्स ब्राह्मणस्स सन्तिके सिप्पं उग्गण्हाति । अथेकदिवसं ब्राह्मणो बोधिसत्तं आदाय केनचिदेव करणीयेन अत्तनो गामा निक्खमित्वा चेतियरट्ठं अगमासि । अन्तरामग्गे एकस्मिं अरञ्ञट्ठाने पञ्चसता पेसनकचोरा नाम पन्थघातं करोन्ति । ते बोधिसत्तञ्च वेदब्भब्राह्मणञ्च गण्हिंसु । कस्मा पनेते पेसनकचोराति वुच्चन्ति, ते किर द्वे जने गहेत्वा एकं धनाहरणत्थाय पेसेन्ति, तस्मा पेसनकचोरा तेव वुच्चन्ति । तेपि च पितापुत्ते गहेत्वा पितरं 'त्वं अम्हाकं धनं आहरित्वा पुत्तं गहेत्वा याही'ति वदन्ति । एतेनूपायेन मातुधीतरो गहेत्वा मातरं विस्सज्जेन्ति, जेट्ठककनिट्ठे गहेत्वा जेट्ठकभातिकं विसज्जेन्ति, आचरियन्तेवासिके गहेत्वा अन्तेवासिकं विस्सजेन्ति ।

ते तस्मिन्नपि काले वैदर्भब्राह्मणं गृहीत्वा बोधिसत्त्वं व्यसर्जिषुः। बोधिसत्त्वः आचार्यं वन्दित्वा 'अहमेकाहद्व्यहात्ययेन आगमि-
बोधिसत्त्वः आचार्यं वन्दित्वा 'अहमेकाहद्व्यहात्ययेन आगमि-
ष्यामि। यूयं मा भैषिष्ट। अपि च खलु मम वचनं कुरुत। अद्य धनवर्षणकनक्षत्रयोगो भविष्यति, मा खलु यूयं दुःखम-सहमाना मन्त्रं परिवर्त्य धनमविवर्षिष्ट। चेद् वर्षयिष्यत यूयं विनाशं प्राप्स्यथ इमे च पञ्चशतं चौराः' इति। एवमाचार्य-मवोद्य धनार्थायागमत्। चोरा अपि सूर्येऽस्तं गते ब्राह्मणं बद्ध्वा न्यपीपदन्। तत्क्षणमेव प्राचीनलोकधातुतः परिपूर्णं चन्द्रमण्डलमुदस्थात्। ब्राह्मणो नक्षत्रमालोकयन् 'धनवर्षणक-नक्षत्रयोगो लब्धः, किं मे दुःखेनानुभूतेन? मन्त्रं परिवर्त्य रत्नवर्षं वर्षयित्वा चोरेभ्यो धनं दत्त्वा यथासुखं गमिष्यामि' इति चिन्तयित्वा चोरान् आममन्त्रत 'भोश्चोराः! यूयं मां किमर्थमग्रहीष्ट' इति। धनार्थाय आर्य!' इति। 'चेद् वो धनेनार्थः, क्षिप्रं मां बन्धनात् मोचयित्वा शीर्षं स्नापयित्वा अहतवस्त्राण्याच्छाद्य गन्धै-र्विलेप्य पुष्पाणि पिनह्य स्थापयत' इति। चोरास्तस्य कथां श्रुत्वा तथाऽकार्षुः। ब्राह्मणो नक्षत्रयोगं ज्ञात्वा मन्त्रं परिवर्त्य आकाशमुदलोकिष्ट। तावदेव आकाशात् रत्नान्यपतन्। चोरा-स्तत् धनं संकृष्य उत्तरासंगेषु भाण्डिकं कृत्वा प्रायासिषुः। ब्राह्मणो-ऽपि तेषां पश्चादेवागमत्। अथ तान् चोरान् अन्ये पञ्चशतं चोरा अग्रहीषुः। 'किमस्मान् अग्रहीष्ट' इति च उक्ताः 'धनार्थाय' इत्यर्थत्यवोचन्। यदि वो धनेनाऽर्थः, एतं ब्राह्मणं गृह्णीत। एष आकाशमुल्लोक्य धनमविवर्षत्। अस्माकमप्येतद् एतेनैव दत्तम्' इति चोराश्चोरान् विसृज्य 'अस्माकमपि धनं देहि' इति ब्राह्मणम-ग्रहीषुः। ब्राह्मणः 'अहं युष्मभ्यं धनं दद्यां, धनवर्षापनकनक्षत्र-योगः पुनः इतः संवत्सरमस्तके भविष्यति। यदि वो धनेनाऽर्थः, अधिवसत, यदा धनवर्षं वर्षयिष्यामि' इत्याह। चोराः

ते तस्मिम्पि काले वेदब्भब्राह्मणं गहेत्वा बोधिसत्तं विस्सजेसुं। बोधिसत्तो आचरियं वन्दित्वा 'अहं एकाहद्वीहच्चयेन आगमिस्सामि। तुम्हे मा भायित्थ। अपि च खो पन मम वचनं करोथ। अज्ज धनवस्सापनकनक्खत्तयोगो भविस्सति। मा खो तुम्हे दुक्खं असहन्तो मन्तं परिवत्तेत्वा धनं पस्सापयित्थ, सचे वस्सापेस्सथ तुम्हे विनासं पापुणिस्सथ इमे च पञ्चसता चोरा'ति। एवं आचरियं ओवदित्वा धनत्थाय अगमासि चोरापि सुरिये अत्थगते ब्राह्मणं बन्धित्वा निपज्जापेसुं। तं खणं येव पाचीनलोकधातुतो परिपुण्णं चन्दमण्डलं उट्ठहि। ब्राह्मणो नक्खत्तं ओलोकेन्तो 'धनवस्सापनकनक्खत्तयोगो लद्धो, किम्मे दुक्खेन अनुभूतेन, मन्तं परिवत्तेत्वा रतनवस्सं वस्सापेत्वा चोरानं धनं दत्वा यथासुखं गमिस्सामी' ति चिन्तेत्वा चोरे आमन्तेसि 'भो चोरा, तुम्हे मं किमत्थाय गण्हित्था'ति 'धनत्थाय अय्या'ति। 'सचे वो धनेन अत्थो खिप्पं मं बन्धना मोचेत्वा सीसं नहापेत्वा अहतवत्थानि अच्छादेत्वा गन्धेहि विलिम्पापेत्वा पुप्फानि पिलन्धापेत्वा ठपेथा'ति। चोरा तस्स कथं सुत्वा तथा अकंसु। ब्राह्मणो नक्खत्तयोगं ञत्वा मन्तं परिवत्तेत्वा आकासं उल्लोकेसि। तावदेव आकासा रतनानि पतिंसु। चोरा तं धनं संकड्ढित्वा उत्तरासङ्गेसु भण्डिकं कत्वा पायिंसु। ब्राह्मणोपि तेसं पच्छतो व अगमासि। अथ ते चोरे अञ्ञे पञ्चसत्ता चोरा गण्हिंसु। 'किमत्थं अम्हे गण्हथा'ति च वुत्ता 'धनत्थाया'ति आहंसु। 'यदि वो धनेन अत्थो एतं ब्राह्मणं गण्हथ, एसा आकासं उल्लोकेत्वा धनं वस्सापेसि, अम्हाकं पेतं एतेनेव दिन्न'न्ति चोरा चोरे विस्सजेत्वा 'अम्हाकम्पि धनं देही'ति ब्राह्मणं गण्हिंसु। ब्राह्मणो 'अहं तुम्हाकं धनं ददेय्य, धनवस्सापनकनक्खत्तयोगो पन इतो संवच्छरमत्थके भविस्सति। यदि वो धनेन अत्थो अधिवासेथ, तदा धनवस्सं वस्सापेस्सामी'ति आह। चोरा

क्रुद्ध्वा 'अहो दुष्टब्राह्मण! अन्येभ्यः इदानीमेव धनं वर्षयित्वा, अस्मान् अन्यं संवत्सरं अधिवासयसि' इति तीक्ष्णेनाऽसिना ब्राह्मणं द्विधा छित्वा मार्गे छर्दित्वा वेगेनाऽनुबद्धय तैश्चोरैः सार्द्धं युद्ध्वा तान् सर्वानपि मारयित्वा धनमादाय पुनर्द्वि-कोष्ठांशा भूत्वा अन्योन्यं युद्ध्वा अर्द्धत्रयाणि पुरुषशतानि घातयित्वा एतेनोपायेन यावद् द्वौ जनौ अवशिष्टौ अभूतां तावद-न्योन्यं अजीघनन्। एवं तत् पुरुषसहस्रं विनाशं प्राप्तम्। तौ पुनः द्वौ जनौ उपायेन तद् धनमाहृत्य एकस्मिन् ग्रामसमीपे 'गहनस्थाने धनं प्रतिच्छाद्य एकः खड्गं गृहीत्वा रक्षन् न्यसदत्। एकस्तण्डुलान् गृहीत्वा भक्तं याचयितुं ग्रामं प्राविक्षत्। 'लोभश्च नामैष विनाश-मूलमेव' इति स धनान्तिके निषण्णोऽचिचिन्तत् 'तस्मिन्नागते इदं धनं द्विकोष्ठांशा भविष्यन्ति यन्नूनमह तमागतमात्रमेव खड्गेन प्रहृत्य घातयेयम्' इति खड्गं संनह्य तस्यागमनमालोकमानो न्यसदत्। इतरोऽप्यचिचिन्तत् 'तद् धनं द्विकोष्ठांशा भविस्यन्ति, यन्नूनमहं भक्ते विषं प्रक्षिप्य तं पुरुषं भोजयित्वा जीवितक्षयं प्रापय्य एकैक एव धनं गृह्णीयाम्' इति स निष्ठिते भक्तं स्वयं भुक्त्वा शेषके विषं प्रक्षिप्य तमादाय तत्रागमत्। तं भक्तमव-तार्य स्थितमात्रमेव इतरः खड्गेग द्विधा छित्त्वा तं प्रतिछन्ने स्थाने छर्दित्वा तच्च भक्तं भुक्त्वा स्वयमपि तत्रैव जीवितक्षयं प्रापत्। एवं तद् धनं निःश्रित्य सर्वेऽपि विनाशं प्रापन्। बोधिसत्त्वोऽपि खलु एकाहद्वयहात्ययेन धनमादाय आगतः। तस्मिन् स्थाने आचार्य-मदृष्ट्वा विप्रकीर्णं पुनर्धनं दृष्ट्वा 'आचार्येण मम वचनम-कृत्वा धनं वर्षितं भविष्यति, सर्वैर्विनाशं प्राप्तैर्भवितव्यम्' इति महामार्गेण प्रयासीत्। गच्छन् आचार्यं महामार्गे द्विधा छिन्नं दृष्ट्वा 'मम वचनमकृत्वा मृतः' इति दारूणि उद्धृत्य चितकं कृत्वा आचार्यं दग्ध्वा वनपुष्पैः पूजयित्वा परतो गच्छन्

कुज्झित्वा 'अम्भो दुट्ठब्राह्मण, अञ्ञेसं इदानेव धनं दस्सापेत्वा, अम्हे अञ्ञं संवच्छरं अधिवासापेसी'ति। तिण्हेण असिना ब्राह्मण द्विधा छिन्दित्वा मग्गे छड्डेत्वा वेगेन अनुबन्धित्वा तेहि चोरेहि सद्धिं युज्झित्वा ते सब्बेपि मारेत्वा धनं आदाय पुन द्वे कोट्ठासा हुत्वा अञ्ञमञ्ञं युज्झित्वा अड्ढत्तियानि पुरिससतानि घातेत्वा एतेन उपायेन याव द्वे जना अवसट्ठा अहेसुं, ताव अञ्ञमञ्ञं घातयिंसु। एवं तं पुरिससहस्सं विनासं पत्तं। ते पन द्वे जना उपायेन तं धनं आहरित्वा एकस्मिं गामसमीपे गहनट्ठाने धनं पटिच्छादेत्वा एको खग्गं गहेत्वा रक्खन्तो निसीदि, एको तण्डुले गहेत्वा भत्तं पचापेतुं गामं पाविसि। 'लोभो च नामेस विनासमूलमेवा'ति सो धनसन्तिके निसिन्नो चिन्तेसि 'तस्मिं आगते इमं धनं द्वे कोट्ठासा भविस्सन्ति, यन्नूनाहं तं आगतमत्तमेव खग्गेन पहरित्वा घातेय्य'न्ति सो खग्गं सन्नय्हित्वा तस्सं आगमनं आलोकेन्तो निसीदि। इतरोपि चिन्तेसि 'तं धनं द्वे कोट्ठासा भविस्सन्ति, यन्नूनाहं भत्ते विसं पक्खिपित्वा तं पुरिसं भोजेत्वा जीवितक्खयं पापेत्वा एककोव धनं गण्हेय्य'न्ति सो निट्ठिते भत्ते सयं भुञ्जित्वा सेसके विसं पक्खिपित्वा तं आदाय तत्थ अगमासि। तं भत्तं आतारेत्वा ठितमत्तमेव इतरो खग्गेन द्विधा छेत्वा तं पटिच्छन्ने ठाने छड्डेत्वा तञ्च भत्तं भुञ्जित्वा सयम्पि तत्थेव जीवितक्खयं पापुणि। एवं तं धनं निस्साय सब्बेपि विनासं पापुणिंसु। बोधिसत्तोपि खो एकाहद्वीहच्चयेन धनं आदाय आगतो। तस्मिं ठाने आचरियं अदिस्वा विप्पकिण्णं पन धनं दिस्वा 'आचरियेन मम वचनं अकत्वा धनं वस्सापितं भविस्सति, सब्बेहि विनासं पत्तेहि भवितब्ब'न्ति महामग्गेन पायासि। गच्छन्तो आचरियं महामग्गे द्विधा छिन्नं दिस्वा 'मम वचनं अकत्वा मतो'ति दारूनि उद्धरित्वा चितकं कत्वा आचरियं झापेत्वा वनपुप्फेहि पूजेत्वा परतो गच्छन्तो

जीवितक्षयं प्राप्तान् पञ्चशतं सरतोऽद्वत्रिंशतमित्यनुक्रमेण अवसाने द्वौ जनौ जीवितक्षयं प्राप्तौ दृष्ट्वाऽचिचिन्तत् । इदं द्वाभ्यामूनं पुरुषसहस्रं विनाशं प्राप्तम् । अन्याभ्यां द्वाभ्यां चोराभ्यां भवितव्यम् तावपि संस्तम्भयितुं न शक्ष्यतः । कुत्र न खलु तौ गतौ' इति गच्छन् तयोर्धनमादाय गहनस्थानप्रविष्टमार्गे दृष्ट्वा गच्छन् भाण्डिकबद्धस्य धनस्य राशिं दृष्ट्वा एकां भक्तपात्रीमवस्तीर्य मृतमद्राक्षीत् । ततः 'इदं नाम ताभ्यां कृतं भविष्यति' इति सर्वं ज्ञात्वा 'कुत्र नु खलु स पुरुषः' इति विचिन्वन् तमपि प्रतिच्छन्ने स्थाने अपविद्धं दृष्ट्वा 'अस्माकमाचार्यो मम वचनमकृत्वा आत्मनो दुर्वचभावेन आत्मनाऽपि विनाशं प्राप्तः अपरमपि तेन पुरुपसहस्रं विनाशितम् । अनुपायेन वत ! अकारणेन आत्मनो वृद्धिं प्रार्थयमाना अस्माकमाचार्य इव महानाशमेव प्राप्स्यन्ति' इति चिन्तयित्वा इमां गाथामाह—

'अनुपायेन योऽर्थमिच्छति स विहन्यते ।
चेदा ( चैद्याः ) अवधिपुर्वैदर्भं सर्वे व्यसनमध्यगुः' ॥ इति

एवं बोधिसत्त्वो 'यथाऽस्माकमाचार्योऽनुपायेनाऽस्थाने पराक्रमं कुर्वन् धनं वर्षयित्वा आत्मना जीवितक्षयं प्राप्तः अन्येषां च विनाशप्रत्ययो जातः, एवमेव योऽन्योऽपि अनुपायेन आत्मनोऽर्थमिष्ट्वाप्यायामं करिष्यति, सर्वशः आत्मना च विनाशयिष्यति, परेशां च विनाशप्रत्ययो भविष्यति' इति वनमुन्नाद्य देवतासु साधुकारं ददमानासु अनया गाथया धर्मं दिष्ट्वा तद् धनमुपायेन आत्मनो गेहमाहृत्य दानादीनि पुण्यानि कुर्वन् यावदायुष्कं स्थित्वा जीवितपर्यवसाने स्वर्गपतं पूरयन् अगमत् ।

[ शास्ताऽपि 'न त्वं भिक्षो ! इदानीमेव दुर्वचाः पूर्वमपि दुर्वचाश्च । दुर्वचस्त्वात् पुनर्महाविनाशं प्राप्तः' इति इदं धर्मदेशनमाहृत्य जातकं समवादीघपत् । 'तदा वैदर्भब्राह्मणो दुर्वचो भिक्षुः, अन्तेवासिकः पुनरहमेव' इति । ]

इति वैदर्भजातकम् ।

जीवितक्खयं पत्ते पञ्चसते परतो अड्ढतियसतेति अनुक्कमेन अवसाने द्वे जने जीवितक्खयं पत्ते दिस्वा चिन्तेसि 'इमं द्वीहि ऊनं पुरिससहस्सं विनासं पत्तं। अञ्ञेहि द्वीहि चोरेहि भवितब्बं। तेपि सन्थम्भितुं न सक्खिस्सन्ति। कहन्नु खो ते गता'ति गच्छन्तो तेस वनं आदाय गहनट्ठानपविट्ठमग्गं दिस्वा गच्छन्तो भण्डिकबद्धस्स वनस्स गासं दिस्वा एकं भत्तपातिं अवत्थरित्वा मतं अद्दस्स। ततो 'इदं नाम तेहि कतं भविस्सती'ति सब्ब ञत्वा 'कहन्नु खो सो पुरिसो'ति विचिनन्तो तम्पि पटिच्छन्ने ठाने अपविद्धं दिस्वा 'अम्हाकं आचरियो मम वचनं अकत्वा अत्तनो दुब्बचभावेन अत्तनापि विनासं पत्तो, अपरम्पि तेन पुरससहस्सं विनासितं। अनुपायेन वत अकारणेन अत्तनो वड्ढिं पत्थयमाना अम्हाकं आचरियो विय महाविनासमेव पापुणिस्सन्ती'ति चिन्तेत्वा इमं गाथमाह—

'अनुपायेन यो अत्थं इच्छति सो विहञ्ञति।
तेता हनिमु वेदब्भं, सब्बे व्यसनमज्झगू'ति॥

एव बोधिसत्तो 'यथा अम्हाकं अ आचरियो अनुपायेन अट्ठाने परक्कमं करोन्तो वनं वस्सापेत्वा अत्तना जीवितक्खयं पत्तो अञ्ञेसञ्च विनासप्पच्चयो जातो एवमेव यो अञ्ञोपि अनुपायेन अत्तनो अत्थं इच्छित्वा वायामं करिस्सति सब्बसो अत्तना च विनसिस्सति परेसञ्च विनासप्पच्चयो भविस्सती'ति वनं उन्नादेत्वा देवतासु साधुकारं ददमानासु इमाय गाथाय धम्मं देसेत्वा तं धनं उपायेन अत्तनो गेहं आहरित्वा दानादीनि पुञ्ञानि करोन्तो यावतायुकं ठत्वा जीवितपरियोसाने सग्गपथं पूरयमानो अगमासि।

[सत्थापि 'न त्वं भिक्खु! इदानेव दुब्बचो, पुब्बेपि दुब्बचोव। दुब्बचत्ता पन महाविनासं पत्तो'पि इमं धम्मदेसनं आहरित्वा जातकं समोधानेसि। 'तदा वेदब्भब्राह्मणो दुब्बचभिक्खु अहोसि, अन्तेवासिको पन अहमेवा'ति। ] वेदब्भजातकं।

# ( १९ ) राजाववाद-जातकम्

[ इदं शास्ता जेतवने विहरन् राजाववादमारभ्याऽकथयत् । वस्तु त्रिशकुनजातके विस्तारतः आविर्भविष्यति । इह पुनः शास्ता 'महाराज ! पुरातनराजानोऽपि पण्डितानां कथां श्रुत्वा धर्मेण राज्यं कारयित्वा स्वर्गपदं पूरयमानाः अगमन्' इत्युक्त्वा राज्ञा याचितः अतीतमाहार्षीत् ।

अतीते वाराणस्यां ब्रह्मदत्ते राज्यं कुर्वति बोधिसत्त्वः तस्याग्रमहिष्याः कुक्षौ प्रतिसन्धिं गृहीत्वा लब्धगर्भपरिहारः स्वस्तिना मातृकुक्षेः निरक्रामीत् । नामग्रहणदिवसे पुनरस्य ब्रह्मदत्तकुमारस्त्वेव नामाकार्षुः । स आनुपूर्व्येण वयःप्राप्तः षोडशवर्षकाले तक्षशिलां गत्वा सर्वशिल्पेषु निष्पत्तिं प्राप्य पितुरत्ययेन राज्ये प्रतिष्ठाय धर्मेण समेन राज्यमकार्षीत् । छन्दादिवशेन अगत्वा विनिश्चयमन्वतिष्ठत् । तस्मिन्नेवं धर्मेण राज्यं कुर्वति अमात्या अपि धर्मेणैव व्यवहारं विन्यचैषुः । व्यवहारेषु धर्मेण विनिश्चीयमानेषु कूटार्थकारकाः नाम नाभूवन् । तेषामभावात् अर्थार्थाय राजाङ्गणे उपरवः प्राच्छिद्यत । अमात्या दिवसमपि विनिश्चयस्थाने निषद्य कञ्चित् विनिश्चयार्थाय आगच्छन्तमदृष्ट्वा प्रक्रामन्ति । विनिश्चयस्थानं छर्दितव्यभावं प्रागात् । बोधिसत्त्वोऽचिन्तयत् "मयि धर्मेण राज्यं कुर्वति विनिश्चयार्थाय आगच्छन्तो नाम न सन्ति, उपरवः प्राच्छिद्यत । विनिश्चयस्थानं छर्दितव्यभावं प्राप्तम् । इदानीं मया आत्मनो अगुणं पर्येषितुं वर्तते । 'अयं नाम मे अगुणः' इति ज्ञात्वा तं प्रहाय गुणेष्वेव वर्तिष्ये" । ततः प्रस्थाय 'अस्ति नु खलु मे कश्चिद् अगुणवादी' इति परिगृह्णन् अन्तोवलञ्जकानां अन्तरे कश्चिद् अगुणवादिनमदृष्ट्वा आत्मनो गुणकथामेव श्रुत्वा 'एते मम भयेनापि अगुणमनुक्त्वा गुणमेव वदेयुः' इति बहिर्वलञ्जनकान् परिगृह्णन् तत्रापि अदृष्ट्वा अन्तर्नगरं पर्यगृह्णात् । बहिर्नगरं चतुर्षु

# (१९) राजोवादजातकं

[ इदं सत्था जेतवने विहरन्तो राजोवादं आरब्भ कथेसि। वत्थु तेसकुणजातके वित्थारतो आविभविस्सति। इह पन सत्था 'महाराज, पोराणकराजानोपि पण्डितानं कथं सुत्वा धम्मेन रज्जं कारेत्वा सग्गपदं पूरयमाना गमिंसु'ति वत्वा रञ्ञो याचितो अतीतं आहरि। ]

अतीते बाराणसियं ब्रह्मदत्ते रज्जं कारेन्ते बोधिसत्तो तस्स अग्गमहेसिया कुच्छिस्मिं पटिसंधिं गहेत्वा लद्धगब्भपरिहारो सोत्थिना मातुकुच्छिम्हा निक्खमि। नामगहणदिवसे पनस्स ब्रह्मदत्तकुमारोत्वेव नामं अकंसु। सो अनुपुब्बेन वयप्पत्तो सोलसवस्सकाले तक्कसीलं गन्त्वा सब्बसिप्पेसु निप्फत्तिं पत्वा पितुअच्चयेन रज्जे पतिट्ठाय धम्मेन समेन रज्जं कारेसि। छन्दादिवसेन अगन्त्वा विनिच्छयं अनुसासि। तस्मिं एवं धम्मेन रज्जं कारेन्ते अमच्चापि धम्मेनेव वोहारं विनिच्छिनिंसु। वोहारेसु धम्मेन विनिच्छियमानेसु कूटट्टकारका नाम नाहेसुं। तेसं अभावा अट्टत्थाय राजङ्गणे उपरवो पच्छिज्जि। अमच्चा दिवसम्पि विनिच्छयट्ठाने निसीदित्वा कञ्चि विनिच्छयत्थाय आगच्छन्तं अदिस्वा पक्कमन्ति। विनिच्छयट्ठानं छड्डेतब्बभावं पापुणि। बोधिसत्तो चिन्तेसि "मयि धम्मेन रज्जं कारेन्ते विनिच्छयत्थाय आगच्छन्ता नाम नत्थि उपरवो पच्छिज्जि. विनिच्छयट्ठानं छड्डेतब्बभावं पत्तं। इदानि मया अत्तनो अगुणं परियेसितुं वट्टति। अयं नाम मे अगुणो'ति ञत्वा तं पहाय गुणेसु येव वत्तिसामी'ति। ततो पट्ठाय 'अत्थि नु खो मे कोचि अगुणवादी'ति परिगण्हन्तो अन्तोवलञ्जकानं अन्तरे कञ्चि अगुणवादिं अदिस्वा. अत्तनो गुणकथमेव सुत्वा, 'एते मय्हं भयेनापि अगुणं अवत्वा गुणमेव वदेय्युं'न्ति वहिवलञ्जनके परिगण्हन्तो तत्रापि अदिस्वा अन्तोनगरं परिगण्हि। वहिनगरे चतुसु

द्वारेषु द्वारग्रामकान् । पर्यगृह्णात् तत्रापि कञ्चिद् अगुणवादिनमदृष्ट्वा आत्मनो गुणकथामेव श्रुत्वा 'जनपदं परिग्रहीष्यामि' इति अमात्ये राज्यं प्रतिष्ठाप्य, रथामारुह्य सारथिमेव गृहीत्वा अज्ञातकवेषेण नगरान् निष्क्रम्य जनपदं परिगृह्णन् यावत् पर्यन्तभूमिं गत्वा कञ्चिद् अगुणवादिनमदृष्ट्वा आत्मनो गुणकथामेव श्रुत्वा प्रत्यन्तसीमतो महामार्गेण नगराभिमुख एव न्यवृतत् । तस्मिन् पुनः काले मल्लिको नाम कोसलराजोऽपि धर्मेण राज्यं कारयन् अगुणगवेषको भूत्वा अन्तोवलञ्जकादिषु अगुणवादिनमदृष्ट्वा आत्मनो गुणकथामेव श्रुत्वा जनपदं परिगृह्णत् तं प्रदेशमगमत् । तौ उभावपि एकस्मिन्र् निम्ने शकटमार्गे अभिमुखौ अभूताम् । रथस्य उत्क्रमणस्थानं नास्ति ।

अथ मल्लिकराजस्य सारथिः वाराणसीराजस्य सारथिं 'तव रथं उत्क्रमय' इत्याह । सोऽपि 'अहो सारथे ! तव रथं उत्क्रमय । अस्मिन् रथे वाराणसीराज्यस्वामिकः ब्रह्मदत्तमहाराजो निषण्णः' इत्याह । इतरोऽपि 'अहो सारथे ! अस्मिन् रथे काशलराज्यस्वामिको मल्लिकमहाराजो निषण्णः । तव रथं उत्क्रमय्य अस्माकं राज्ञो रथस्य अवकाशं देहि' इत्याह । वाराणसीराजस्य सारथिः 'अयमपि किल राजैव, किं नु खलु कर्तव्यं' इति चिन्तयन्, 'अस्त्येष उपायः । वयः पृष्ट्वा दहतरस्य रथं उत्क्रमय्य महल्लकस्य अवकाशं दापयिष्यामि' इति सनिष्ठानं कृत्वा त सारथिं कोशलराजस्य वयः पृष्ट्वा परिगृह्णन् उभयमपि समानवयोभावं ज्ञात्वा राज्यपरिमाणं बलं धनं यशो जातिगोत्रकुलापदेशमिति सर्वं पृष्ट्वा उभावपि त्रियोजनशतकस्य राज्यस्य स्वामिनौ समानबलधनयशोजातिगोत्र-कुलापदेशौ' इति ज्ञात्वा 'शीलवत्तरस्य अवकाशं दास्यामि स सारथिः 'युष्माकं राज्ञः शीलाचारः कीदृशः' इति अप्राक्षीत् । स 'अयं च अयं च अस्माकं राज्ञः शीलाचारः' इति आत्मनो राज्ञः अगुणमेव गुणतः प्रकाशयन् प्रथमां गाथामाह—

वह ऐसा कह, उसी दिन राज्य त्याग ऋषियों की भाँति प्रव्रजित हो, उसी मखादेव-आम्रवन मे विहार* करते हुए चौरासी हजार वर्षों तक चार ब्रह्मविहारों की भावना पर ध्यान के साथ ही रहते मर कर ब्रह्मलोक में उत्पन्न हो, पुनः वहाँ से च्युत हो, मिथिला में ही निमि नामक राजा हो समाप्त होते हुए अपने वंश को दृढ़ करके वहीं आम्र-वन में प्रव्रजित हो, ब्रह्मविहारों की भावना कर फिर ब्रह्मलोक को ही चला गया।

[ शास्ता ने भी "भिक्षुओं ! तथागत ने इस समय ही नहीं महाभि-निष्क्रमण किया है, पहले भी किया ही था।" ( कह ) धर्मोपदेश दे, चार सत्यों को प्रकाशित किया। कोई-कोई स्रोतापन्न हुए, कोई-कोई सकृदा-गामी, कोई-कोई अनागामी। भगवान् ने इन दो कथाओं को कह मेल बैठा जातक को समाप्त किया। उस समय नाऊ आनन्द था, पुत्र राहुल, मखादेवराजा तो मै ही था।

—:o:—

*मैत्री, करुणा, मुदिता और उपेक्षा को ब्रह्मविहार कहते हैं। इनकी भावना कर व्यक्ति ब्रह्मलोक में उत्पन्न होता है।

# पालिव्याकरणसंक्षेपः ।

## वर्णविचारः ।

पालिभाषायामष्टावेव स्वराः प्रयुक्ता दृश्यते । ऋकारऌकारैकारौकाराणां दर्शनं नैवात्र लभ्यते ।

संस्कृतस्वराणां पालिस्वरेषु परिवर्तनप्रकाराणि कानिचित् सोदाहरणमधो विनिर्दिश्यन्ते ।

अ=आ, यथा-प्रत्यमित्रः-पच्चामित्तो ।
=इ, यथा-राजज्ञी=राजिनिय ।
=उ, यथा-निमज्जति=निमुज्जति ।
=ए, यथा-फल्गु=फेल्गु ।
आ=अ, यथा-आसिका=असिका ।
=ए, यथा-मातृका=मेचिका ।
इ=अ, यथा-हिचिकुत्सः-हत्तिकच्छतुं ।
=उ, यथा-इक्षुः=उच्छु ।
=ए, यथा-अग्रमहिषी=अग्गमहेसी ।
=ओ, यथा-इक्ष्वाकुः=ओक्काको ।
ई=अ, यथा-कौसीद्यं=कोसज्जं ।
उ=अ, यथा-मुकुलं=मकुलं ।
=इ, यथा-पुरुषः=पुरिसो ।
=ए, यथा-डुडुमः=देड्डुमो ।
=ओ, यथा-प्रामुख्यं=पामोक्खं ।
ऊ=अ, यथा-कूर्परः=कप्परो ।
=ओ, यथा-गुडूची=गोळाची ।

ऋ=अ, यथा-गृहं=गहं ।
=इ, यथा-ऋणं=इणं ।
=उ, यथा-ऋतुः=उतु ।
ए=इ, यथा-महेन्द्रः=महिन्दो ।
=ओ, यथा-द्वेषः=दोसो ।
ऐ=ए, यथा-ऐरावणः=एरावणो ।
=इ, यथा-सैन्धवः=सिन्धवो ।
=ई, यथा-ग्रैवेयं=गीवेय्यं ।
ओ=उ, यथा-होत्रं=हुत्तं ।
औ=ओ, यथा-औदुम्बरं=ओदुम्बरं ।
=उ, यथा-औत्सुक्यं=उस्सुक्कं ।
(अनुस्वारः)=तद्वर्णवर्गपञ्चमाक्षरः ।
ः (विसर्गः) पालिभाषायां नैव दृश्यते ।

अथ व्यञ्जनानां परिवृत्ति-
प्रकारः प्रदर्श्यते-

[ असंयुक्तानाम् ]

क=ग, यथा-मूकः=मूगो ।

क = ट, यथा–कक्कोलं = टक्कोलं ।
= क्क, यथा–भिषक्—भिसक्को ।
= य, यथा–स्वकं = सयं ।
= व, यथा–लकुचं = लवुजं ।
ग = क, यथा–भृङ्गारः = भिङ्कारो ।
= घ, यथा–गृह = घरं ।
घ = ह, यथा-प्राघुणः = पाहुणो ।
च = ज, यथा–लकुचं = लवुजं ।
= त, यथा–चिकित्सा = तिकिच्छा ।
ज = च, यथा–प्राजयति = पाचेति ।
= द, यथा–ज्योत्स्ना = दोसिना ।
= य, यथा–निजं = नियं ।
ट = ठ, यथा–कण्टक = कण्ठकं ।
= ड, यथा-लेष्टुः = लेड्डुः ।
= ल, यथा–स्फटिकः = फलिको ।
=ळ, यथा–आटविकः=आळविको ।
ड = ळ, यथा–बडवा = वळवा ।
ढ = ळ्ह, यथा—दृढः = दळ्हो ।
ण = न, यथा—चिरेण = चिरेन ।
= ळ, यथा—वेणु. = वेळु ।
= ट, यथा—आर्तः = अट्टो ।
= थ, यथा— तुषः = थुसो ।
= द, यथा—वितस्तिः=विदस्थि ।
थ = ठ, यथा—ग्रन्थिः = गण्ठि ।
द=ट, यथा–प्रादुर्भावः=पातुभावो ।
( पातुभावो )

द = ड, यथा—दंशः = डंसो ।
= त, यथा—कुसीदः = कुसीतो ।
= थ, यथा—खादितः = खायितो ।
= ळ, यथा—परिदाहः=परिळाहो ।
ध=भ, यथा–अधिरोहण=अभिरोहणं ।
=ल, यथा–गोधिका=गोलिका (गोधिका)
= ह, यथा—श्रद्धाति = सद्दहति ।
= ळ्ह, यथा द्वेधकं = द्वेळ्हकं ।
न = ण, यथा—अवनतं = ओणतं ।
= ल, यथा—एनः = एलं ।
प=क, यथा–पिपीलकः=किपिल्लको ।
= फ, यथा— पलितः = फलितो ।
= व, यथा— कपित्थः = कवित्थो ।
फ = प, यथा—स्फोटयति = पोठेति ।
ब = प, यथा—अलाबुः = अलापु ।
= भ, यथा—बुसं = भुसं ।
= व, यथा—पिब = पिव ।
भ=ध, यथा-अभिप्रेता = अधिप्पेतो ।
= ह, यथा—प्रभवति = पहोति ।
य=अ, यथा—कतिपयाहं=कतिपाहं ।
= ह, यथा—त्र्यहः = तिहो ।
= ज, यथा—गवयः = गवजो ।
= ल, यथा—यष्टिः = लट्ठि ।
= व, व, यथा—आयुध=आवुधं ।
'(रेफ)' ( अनुस्वार )
यथा–अकार्षुः = अकंसु

ल = न, यथा–ललाटं = नलाटं
व = उ, यथा–लवणं = लोणं
श = छ, यथा–शवः = छट्ठो
= ह, यथा–शाकं = हाकं
ष = छ, यथा—षष्ठः = छट्ठो
= ढ, यथा–आकर्षणं = आकड्ढनं
ह = घ, यथा,–इह = इघ
= भ, यथा–गह्वरं = गब्भरं

[ संयुक्तानाम् ]

क्थ = त्थ, यथा–सिक्थं = सित्थं
क्ष = (पदादौ) ख, यथा—क्षीरं=खीरं
= च, यथा–क्षुल्लः = चुल्लो
= छ, यथा–क्षुद्रः = खुद्दो
क्ष = ( पदमध्ये पदान्ते वा )
= क्ख, यथा—मोक्षः = मोक्खो
= च्छ, यथा—पक्षः = पच्छो
ज्झ, यथा–विक्षायति = विज्झायति
ज्ञ = ञ, यथा–ज्ञानं = ञानं
= ञ्ञ, यथा—संज्ञा = सञ्ञा
ण्म = म्म, यथा–षण्मासः = सम्मासो
ण्य = ञ्ञ, यथा—अरण्यं = अरञ्ञं
त्य = च, यथा—त्यागः = चागो
= घ, यथा—नृत्यं = नच्चं
थ्य = च्छ, यथा—मिथ्या = मिच्छा
त्स = च्छ, यथा—मत्स्यः = मच्छो
द्य = ज, यथा—द्युतिः = जुति

द्य = ज्ज, यथा—अद्य = अज्ज
ध्य = झ, यथा—ध्यानं— = झानं
= ज्झ, यथा–सिध्यति = सिज्झति
न्य = ञ, यथा—न्यायः = ञायी
= ञ्ञ, यथा—अन्यः = अञ्ञो
= नि, यथा—न्यग्रोधः = निग्गोघो
प्त = त्त, यथा—प्राप्तः = पत्तो
प्स = च्छ, यथा—अप्सराः = अच्छरा
व्य = वि, यथा–व्यतिक्रमः=वितिक्कमो
= व, यथा—व्यायामः = वायामो
श्च=च्छ, यथा—आश्चर्यं = अच्छरियं
श्छ = च्छ, यथा—निश्चलः=निच्छलो
ष्क = क, यथा–दुष्करं = दुकरं
= क्ख, यथा–शुष्क = सुक्खं
ष्ट = ट्ठ, यथा–नष्टः = नट्ठो
ष्ठ = ट्ठ, यथा—षष्ठः = छट्ठो
ष्म = म्ह, यथा–ग्रीष्मः = गीम्हो
= स्स, यथा–जातिस्मरः=जातिस्सरो
स्क = ख, यथा—स्कन्धः = खन्धो
क्ख, यथा—प्रस्कन्दति = पक्खंदति
= क्क, यथा–नमस्कारः = नमक्कारो
स्ख = ख, यथा—स्खलितः = खलितो
स्त = त्थ, यथा–हस्तः = हत्थो
= त्त, यथा=अस्तः = अत्तो
स्थ = त्थ, यथा–स्थूलः=थूलो
= ठ, यथा—स्थानं = ठानं

स्थ = त्थ, यथा—अवस्था = अवत्था
= ठ, यथा—प्रस्थाय = पट्ठाय
स्प = फ, यथा—स्पन्दः = फन्दो
स्फ = फ, यथा—स्फटिकः = फटिको
ह्य = य्ह, यथा—मह्यं = मय्ह
ह्व = व्ह, यथा—आह्वानं = आव्हानं

—०—

## सन्धिप्रकरणम्

स्वरवर्णात्पूर्वस्य स्वरस्य क्वचिल्लोपः, यथा—यस्स + इन्द्रियाणि + यस्सिन्द्रियाणि

स्वरात्परस्य स्वरस्य क्वचिल्लोपः, यथा वसलो + इति = वसलो'ति

पूर्वस्वरे लुप्ते क्वचित्परस्य दीर्घत्वं, यथा—सचे + अहं = सचाहं

परस्वरे लुप्ते क्वचित्पूर्वस्य दीर्घत्वं, यथा—साधु + इति = साधूति

असमानस्वरवर्णपूर्वस्य इकारस्य इय, उकारस्य उव, इत्यादेशो भवति

यथा—परि + एसना = परियेसना,
भिक्खु + आसने = भिक्खुवासने

व्यञ्जन वर्णस्य सो एसो इतिशब्दद्वयस्य, ओकारस्थाने अकारो भवति,

यथा—सो + सीलवा = स सीलवा, एसो + धम्मो = एस धम्मो।

अनुस्वारपरो यो वर्णस्तद्वर्गस्य पञ्चमाक्षरोऽनुस्वारस्थाने भवति।

यथा—जुतिं + धरो = जुतिन्धरो।

स्वरपूर्वस्य स्वरस्य क्वचित् 'म्' इत्यागमो भवति,

यथा—लहु + एस्सति = लहुमेस्सति

स्वरपूर्वस्य स्वरस्य क्वचित् 'द्' इत्यागमो भवति,

यथा—सम्मा + अत्थो + सम्मदत्थो।

अनुस्वारपरस्य स्वरस्य क्वचिल्लोपो भवति, यथा—किं + इति = किन्ति

## सुबन्तप्रकरणम्

(१) अकारान्तः पुल्लिङ्गो 'बुद्ध' शब्दः (२) इकारान्तः 'अग्गि' शब्दः

| | एकवचन | बहुवचन | एक० | बहु० |
|---|---|---|---|---|
| प्र० | बुद्धो | बुद्धा | अग्गि | अग्गी |
| द्वि० | बुद्धं | बुद्धे | अग्गिं | अग्गी |
| तृ० | बुद्धेन | बुद्धेहि बुद्धेभि | अग्गिना | अग्गिहि, अग्गिभि |
| च० | बुद्धस्स, बुद्धाय | बुद्धानं | अग्गिनो, अग्गिस्स | अग्गिनं |
| पं० | बुद्धा, बुद्धस्मा, बुद्धम्हा | बुद्धेहि, बुद्धेभि | अग्गिना, अग्गिस्मा, अग्गिम्हा | अग्गिहि, अग्गिभि |
| ष० | बुद्धस्स | बुद्धानं | अग्गिनो, अग्गिस्स | अग्गिनं |
| स० | बुद्धे, बुद्धस्मिं, बुद्धम्हि | बुद्धेसु | अग्गिनि, अग्गिस्मिं, अग्गिम्हि | अग्गिसु, अग्गीसु |
| सम्बो० | बुद्ध, बुद्धा | बुद्धा | अग्गि | अग्गी |

(३) उकारान्तो 'भिक्खु' शब्दः (४) आकारान्तः स्त्रीलिङ्गः 'कञ्ञा' शब्दः

| | एकवचन | बहुवचन | एक० | बहु० |
|---|---|---|---|---|
| प्र० | भिक्खु | भिक्खू, भिक्खवो | कञ्ञा | कञ्ञा, कञ्ञायो |
| द्वि० | भिक्खुं | भिक्खू, भिक्खवो | कञ्ञं | ,, ,, |
| तृ० | भिक्खुना | भिक्खूहि, भिक्खूभि | कञ्ञाय | कञ्ञाहि, कञ्ञाभि |
| च० | भिक्खुनो, भिक्खुस्स | भिक्खूनं | कञ्ञाय | कञ्ञानं |
| पं० | भिक्खुना, भिक्खुस्मा | भिक्खूहि, भिक्खुम्हा, भिक्खूभि | कञ्ञाय | कञ्ञाहि, कञ्ञाभि |
| ष० | भिक्खुनो, भिक्खुस्स | भिक्खूनं | कञ्ञाय | कञ्ञानं |

| | एकवचन | बहुवचन | एक० | बहु० |
|---|---|---|---|---|
| स० | भिक्खुस्मिं, भिक्खुम्हि | भिक्खुसु | कञ्ञाय, कञ्ञायं | कञ्ञासु |
| सम्बो० | भिक्खु | भिक्खू, भिक्खवो | कञ्ञे | कञ्ञा, कञ्ञायो |

(५) ईकारान्तः 'इत्थी' शब्दः

| | | |
|---|---|---|
| प्र० | इत्थी | इत्थी, इत्थियो |
| द्वि० | इत्थियं इत्थिं | ,, ,, |
| तृ० | इत्थिया | इत्थिहि, इत्थिभि |
| च० | ,, | इत्थिनं |
| प० | ,, | इत्थिहि, इत्थिभि |
| ष० | ,, | इत्थिनं |
| स० | ,, | इत्थिसु |
| सम्बो० | इत्थि | इत्थी, इत्थियो, |

(६) अकारान्तो नपुं० 'चित्त' शब्दः

| | |
|---|---|
| चित्तं | चित्ता, चित्तानि |
| चित्तं | चित्ते ,, |

[ शेषं बुद्धशब्दवत् ]

(८) सर्वनाम 'तुम्ह' शब्दः

| | |
|---|---|
| त्वं, तुवं | तुम्हे |
| त्वं, तुवं, तवं, तं | तुम्हाकं |
| त्वया, तथा | तुम्हेहि, तुम्हेभि |
| तव, तुय्यं, तुम्हं | तुम्हाकं |
| त्वया, तया | तुम्हेहि, तुम्हेभि |
| तव, तुय्हं, तुम्हं | तुम्हाकं |
| त्वयि, तयि | तुम्हेसु |

(७) उकारान्तो 'मधु' शब्दः

| | | |
|---|---|---|
| प्र० | मधु | मधु, मधुनि |
| द्वि० | मधुं | ,, ,, |

[ शेषं भिक्खुशब्दवत् ]

(९) सर्वनाम 'अम्ह' शब्दः

| | | |
|---|---|---|
| प्र० | अहं | मयं, अम्हे |
| द्वि० | मम, ममं | अम्हाकं, अम्हे |
| तृ० | मया | अम्हेहि, अम्हेभि |
| च० | मम, ममं मय्हं, अम्हं | अस्माकं, अम्हाकं |
| प० | मया | अम्हेहि, अम्हेभि |
| ष० | मम, ममं, मय्हं, अम्हं | अस्माकं, अम्हाकं |
| स० | मयि | अम्हेसु |

## आख्यातकल्पः

( तिङन्तप्रक्रिया )

पालिभाषायां परस्मैपदप्रयोग एव प्रायो दृश्यते। गणाश्च धातूनामत्र सप्तैव भवन्ति। अदादिर्जुहोत्यादिस्तुदादिश्चेति त्रयो गणा भ्वादिगण एव परिगणिता भवन्ति। लकारेष्वपि आशीर्लिङ्लुटोः प्रयोगो नैवोपलभ्यते। लिटोऽपि प्रयोगो विरल एव। लुङस्तु प्रचारः प्रचुरतरः।

भूधातोः रूपाणि—

लट्

| | एकवचन | बहुवचन |
|---|---|---|
| प्रथमपुरुष | भवति, होति | भवन्ति, होन्ति |
| मध्यमपुरुष | भवसि, होसि | भवथ, होथ |
| उत्तमपुरुष | भवामि, होमि | भवाम, होम |

लोट्

| | | |
|---|---|---|
| प्र० पु० | भवतु, होतु | भवन्तु, होन्तु |
| म० पु० | भव, भवाहि, होहि | भवथ, होथ |
| उ० पु० | भवामि, होमि | भवाम, होम |

विधिलिङ्

| | | |
|---|---|---|
| प्र० पु० | भवेय्य, भवे, हेय्य | भवेय्युं, हेय्युं |
| म० पु० | भवेय्यासि, भवे, हेय्यासि | भवेय्याथ, हेय्याथ |
| उ० पु० | भवेय्यामि, भवे, हेय्यामि | भवेय्याम, हेय्याम |

लङ्

| | | |
|---|---|---|
| प्र० पु० | अभवा, अभूवा | अभवु, अहुवु, अहुवू |
| म० पु० | अभवो, अहुवो | अभवत्थ, अहुवत्थ |
| उ० पु० | अभव, अभवं, अहुवं | अभवम्हा, अहुवम्हा |

लुङ्

| | ए० व० | ब० व० |
|---|---|---|
| प्र० पु० | अभवि अभवी, अहोसि अहू | अभवुं, अभविंसु<br>अहेसुं, अहुं |
| म० पु० | अभवो, अभवि, अहोसि | अभवित्थ, अहोसित्थ |
| उ० पु० | अभविं, अहोसिं, अहुं | अभविम्हा, अभविम्ह<br>अहोसिम्ह, अहुम्ह |

* लृट्

| | | |
|---|---|---|
| प्र० पु० | भविस्सति | भविस्संति |
| म० पु० | भविस्ससि | भविस्सथ |
| उ० पु० | भविस्सामि | भविस्साम |

लृङ्

| | | |
|---|---|---|
| प्र० पु० | अभविस्स, अभविस्सा | अभविस्संसु |
| म० पु० | अभविस्से, अभविस्स | अभविस्सथ |
| उ० पु० | अभविस्सं | अभविस्सम्हा, अभविस्सम्ह |

## अव्ययप्रकरणम्

उपसर्गाः—प्रादयः क्रियायोगे उपसर्गा इत्युच्यन्ते। तेऽत्रापि पालिभाषायां संस्कृत इव विद्यन्तएव। यथा संस्कृते उपसर्गेण धात्वर्थो बलादन्यत्र नीयते तथैवात्राऽपि। पालिवैयाकरणैरेषां त्रिधा गतिरुपलक्षिता। तद् यथा—

धात्वत्थं बाधते कोचि कोचि तमनुवत्तते।
तमेवञ्ञे विसेसेन्ति उपसग्गगती तिधा॥

* हू इत्यादेशे कृतेऽत्र बहूनि रूपाणि सम्भवन्ति। विस्तरभयान्नात्र प्रदर्शितानि।

विभक्त्यर्थान्यव्ययानि—कानिचिदव्ययानि विभक्त्यर्थे प्रयुज्यन्ते । तद् यथा—

प्रथमार्थे—अत्थि, सक्का इत्यादीनि

द्वितीयार्थे—दिवा, भिय्यो ,,

तृतीयार्थे—सयं, सामं ,,

सप्तम्यर्थे—अपरज्जु, एकज्झं ,,

सर्वनामनिष्पन्नान्यव्ययानि—कानिचिदव्ययानि सर्वनामशब्दै-र्निष्पद्यन्ते । तद् यथा—

कुहिं, तहिं, अञ्ञथा, प्रभृतीनि ।

## कृदन्तप्रकरणम्

शतृ, शानच् = अन्त, आन, मान, । यथा—गच्छन्तो, गच्छानो, गच्छमानो ।

क्तवत् = तावी । यथा—भुत्तावी ( भुक्तवान् ) ।

क्त, क्तवत् = त, तवन्त । यथा—हुतो ( हुतः ), हुतवा ( हुतवान् ) ।

तव्यत् = तब्ब । यथा—भवितब्बं ।

क्त्वा, ल्यप् = त्वा, त्वान, तून, य । यथा—कत्वा, कत्वान, कातून,
निस्साय, निस्सित्वा ।

तुमुन् = तुं, तवे । यथा—कातुं कत्तुं, कातवे, कत्तवे ।

## कारकप्रकरणम्

सप्तम्यर्थे कदाचिद् द्वितीया प्रयुज्यते । तद् यथा—एकं समयं भगवा सावत्थियं विहरति = एकस्मिन् समये भगवान् श्रावस्त्यां विहरति ।

सतम्यर्थे कदाचिद् तृतीया प्रयुज्यते । तद् यथा—तेन खो पन समयेन भगवा एतदवोच = तस्मिन् खलु पुनः समये भगवान् एतदवोचत् ।

## समासप्रकरणम्

पालिभाषायां समासे क्वचित् सन्धेरभावः—आवट्ट-ऊमिवेगजनित हलाहंलसद्दं ।

समासपूर्वपदस्थयो आकारेकारयोः क्वचिद् ह्रस्वत्वम् यथा—बाराणसिरञ्ञो, इत्थिभावो ।

## तद्धितप्रकरणम्

केऽपि तद्धितप्रत्ययाः पालिभाषायां प्रयुक्ता अधः प्रदर्श्यन्ते—

इम—पच्छा जातो इति पच्छिमो ( पश्चिमः ) ।

ईय—मदनस्स ठानं इति मदनीयं ।

आयितत्त—तिमिरं विय दिस्सतीति तिमियातत्तं ।

ल—वेदस्स ठानं वेदनिस्सितं वा वेदल्लं ।

त्तन—पुथुजनस्सभावो पुथुज्जनत्तनं ( पृथग्जनत्वम् ) ।

इस्सिक—पापिस्सिको ( पापीयः, पापिष्ठः ) ।

क्खत्तुं—द्विक्खत्तुं ( द्विकृत्वः ) ।*

---

* एतस्मिन् पालिव्याकरणसंक्षेपे श्रीमतां विधुशेखरशास्त्रिणां पालिप्रकाशात् स्थले स्थले साहाय्यमासादितमित्येषाम्भारं सतंमदमूरीकुर्मः । विस्तरस्तु जिज्ञासुभिस्तत्रैव ग्रन्थरत्ने विलोकनीयः ।

# अथ पालिपाठपदोच्चयः ।

[ अ ]

अकंसु--( अकार्षुः )√कृ + लुङ्, प्रथ० बहु० कृतवन्तः, अकुर्वन्

अकञ्ञुतं--(अकृतज्ञतां) कृतघ्नताम् ।

अकतञ्ञु--( अकृतज्ञम् ) कृतज्ञतारहितम् कृतघ्नम् । 'कतगुणंअजानन्तं' इति जातकत्थवण्णना ।

अकत्तारं--( अकर्त्तारम् ) प्रत्युपकारकृतिशून्यम् 'सयं किञ्चि अकरोन्तं' इति जातकत्थवण्णना ।

अकरम्हसे--(अकार्ष्व, अकार्ष्महि) √कृ + लुङ्, उत्त० बहु० एकवचनार्थे बहुवचनप्रयोगः अकरोमित्यर्थः ।

अगमंसु--(अगमन्) √गम + लुङ्, प्रथ० बहु० अगच्छन्, गताः ।

अगमासि--अगमत् √गम + लुङ्, प्रथ० एक० अगच्छत्, गतः ।

अग्घापनियकम्मं--( अर्घापनीयकर्म, अर्घापनिककर्म ) वस्तुमूल्यनिर्णायिकं कर्म ।

अग्घापेति-- अर्घयति) मूल्यं निश्चिनोति । अग्घो मूले च पूजने' इत्यभिधानप्पदीपिका ।

अच्चन्तनिकतिप्पञ्ञो-(अत्यन्तनिकृतिप्रज्ञः अतिकपटबुद्धिः, अतिदुष्टाशयः

अच्छरासद्दा (अनिश्चितनिरुक्तिकमिदं पदम् । केचिदक्षरशब्देन तदन्ये 'अच्छरा' इति देशिपदेन सम्बन्धमीहन्ते ।) 'अच्छरा' इति अंगुलीत्रोटनशब्दः ।

अज्झत्तसमुट्ठाना--( आध्यात्मसमुत्थाना ) आभ्यन्तरोद्भवा ।

अज्झासयगहणत्थं--( अध्याशयग्रहणार्थं हृदयभावबोधाय, तेषां हृदये कीदृशो विचार इति ज्ञानार्थम् ।

अञ्ञमञ्ञं--(अन्योन्यं) परस्परम् ।

अञ्ञातकवेसेन--( अज्ञातकवेषेण ) अपरिचितानुरूपपरिच्छदेन ।

अट्टत्थाय--(अर्थार्थाय ) व्यवहारविनिश्चयाय । अधिकृतैर्व्यवहारो यथावद् दृश्येतेति हेतुना ।

अट्ठासि--(अस्थात्)√स्था + लुङ्, प्रथ० ए० अतिष्ठत् ।

अट्ठूसभमत्तं (अष्टोषभमात्रम्) उसभं अध्व-परिमाणविशेषः । तत्परिमाणम् । 'उसभं वीसयट्ठियं' इत्यभिधानप्पदीपिका ।
उसभ = २० यष्टि ।

अड्ढतियानि–(अर्धतृतीयानि) सार्द्ध-द्विशतम् 'तृतीयोऽड्ढतियो तथा अड्ढतेय्यो' इत्यभिधानप्पदीपिका

अतिभगिनिपुत्तो–अतिभगिनीपुत्रः ) अतिप्रियो भागिनेयः।

अत्थि—( अस्ति ) वर्तते, विद्यते। √अस + लट्, प्रथ० एक०। बहुवचने 'सन्ति' इत्यर्थेऽपि प्रयुज्यते।

अत्तभावो—(आत्मभावः) शरीरम्। 'अत्तभावो वोन्दि विग्गहो' इत्यभिधानप्पदीपिका।

अदासि—( अदात् ) √दा + लुङ्, प्रथ० एक० अयच्छत्, दत्तवान्,

अद्दस—( अद्राक्षीत् )√दृश + लुङ् प्रथ० एक० अपश्यत्।

अधिवासापेसि—( अधिवासयसि ) अधि√ वस + लट् + णिच्, मध्य० एक० अवस्थातुमादिशसि

अधिवासेत्वा—(अधिवास्य) अधि + √वस + णिच् + ल्यप्। वासं कारयित्वा।

अधिवासेथ—(अधिवसत) अधि + √वस + लोट् + मध्य० बहु० अत्रैव वासं कुरुत।

अनिय्यानिकं–(अनिर्याणिकं) अहितं, हानिकरम्।

अनुच्छविको—( आनुच्छविकः ) अनुरूपः, योग्यः 'पतिरूपोऽनुच्छविको' इत्यभिधानप्पदीपिका।

अनुञ्ञातत्ता-(अनुज्ञातत्वात्) अनु + √ज्ञा + क्त + त्व। अनुमतत्वात्

अनुबन्धि-(अन्वभान्त्सीत्) अनु + √ √बन्ध + लुङ्, प्रथ० एक०। अन्ववध्नात्, अन्वसरत्।

अनुसासि – (अन्वशात् ) अनु + √शास + लुङ्, प्र० एक०। अन्वतिष्ठिपत्, कृतवानिति यावत्।

अनुसुय्यं—(अनसूयम्) असूयारहितं, ईर्ष्याशून्यम्।

अनुस्सरित्वा—(अनुस्मृत्य) अनु + √स्मृ + क्त्वा। स्मृतिं सम्प्राप्य।

अन्तोडाहो—( अन्तर्दाहः ) अनुतापस्वरूपो हृदयसन्तापः।

अपाटच्छिन्नो—(अप्रतिच्छन्नः प्रतिच्छदरहितः नग्नः।

अपनेतब्बाकारपत्ता-(अपनेतव्याकारप्राप्ताः ) अपनेतव्यं दूरीकरणीयं आकारं स्वरूपं अवस्थां प्राप्ताः गताः। अतिप्रचुरपरिमाणा इत्यर्थः

अपानयि—(अपानैषीत्) अप + √ नी + लुङ्, प्रथ० एक० अपनयत्

अपाभतं-( अपाभृतम् ) अप + आ √भृ + क्त।
अपूजेसुं-(अपूपुजन्)√पुज + लुङ्, प्रथ०बहु०आपूजयन्, सत्कृतवन्तः।
अप्पतिकारकं—( अप्रतिकारकम् ) परोपकृतिं विस्मृत्य, प्रत्युपकारविमुखम्।
अप्पतिस्स—( अपतेः ) पतिरहितस्य, अस्वामिकस्य।
अभिरूहि-( अभ्य·ध्य रुक्षत् ) अभि-वि + √रुह + लुङ्, प्रथ० एक०। अध्यारूढः।
अरक्खिता—(अरक्षिता) दुरवेक्ष्या, दुश्चरित्रा, कुलटा।
अरियसावको-(आर्यश्रावकः) शिष्यविशेषः, विशिष्टो विद्यास्नातकाः।
अरुणुग्गमना —( अरुणोद्गमनात् ) सूर्योदयारम्भात्।
अलङ्कतपटियत्ता—अलङ्कृतप्रतियत्ताः। अलम् + √कृ + क + प्रति√यत + क्त। अलङ्कारैर्विभूषिताः, प्रयत्नपरिभूषिताः।
अवसितं-( शोभनम् ) 'पणितो ती सुमधुरे उत्तमे निहितेऽप्यथ' इत्यभिधानप्पदीपिका।
अवीचि-(अवीचिः) अष्टानां नरकानामन्यतमः। यथोक्तम्-संजीवो कालसुत्तो च महारोरुव रोरुवा। पतापनो अवीचि त्थी संघातो तपनो इति।
असक्खि-( अशकत् ) √शक + लुङ्, प्रथ० एक। अपारयत्।
अहायथ ( अहायि )√हा + लुङ्, प्रथ० एक० परिहीनः।
अहुवम्हसे-( अभूम )√भू + लुङ्, उत्त० बहु०। अत्र न केवलं वचनविपर्ययः पुरुषविपर्ययोऽपि। अभूदित्यर्थः।
अहेसुं-( अभूवन् )√भू + लुङ्, प्र० बहु० आसन, अभवन्।
अहोसि-( अभूत् ) √ भू + लुङ्, प्रथ० एक० अभवत्।
अळं-(अलं) कर्कटादिकानां संदशाकारं तुण्डम्।

[ आ ]

आचिक्खि—(आख्यात्) आ + √चक्ष + लुङ, प्रथ०एक०अवदत्।
आदित्तपण्णसालं-( आदीप्तपर्णशालाम् प्रज्वलितोटजम्। अग्निपरिगृहीतपर्णाच्छादनभवनम्।
आदीनवो-(आदीनवः) दोषः, क्लेशः 'आदीनवास्रवो क्लेशे' इत्यमरः।

आनायिम्ह–(आनैषिष्म) आ + √ना + लुङ्, उत्त० बहु० आनयाम, आनायितवन्तः ।

आनुभावेन—(आनुभावेन) प्रभावेन

आपज्जि–(आपादि) आ + √पद + लुङ्, प्रथ० एक० आपन्नः ।

आरब्भ–(आरभ्य) आ + √रभ + ल्यप् आलभ्य, उद्दिश्य ।

आरभि–(आरब्ध) आ + √रभ + लुङ्, प्रथ० एक० उपाक्रमत् ।

आराधे—आरोधेति ( आराध्नाति ) प्राप्नोति, पटिलमतीति जातकत्थ-वण्णना ।

आराधेय्य ( आराधयेत् ) न शं प्राप्नुयादिति पाश्चात्यपण्डिताः

आरोचितसञ्ञाय–(आरोचितसंज्ञया) प्रार्थितक्शेन, प्राथनैकहेतुना ।

आरोचेसुं–(आरूरुचन्त) आ + √रुच + लुङ् + णिच्, प्रथ० + बहु० व्यज्ञापयन् ।

आहंसु—(आहुः) √ब्रू + लट्, प्रथ० बहु० ब्रुवते । भूतार्थेऽपि । अवोचन् । 'इदं रूपं विकल्पेन आहुः' इत्येतस्य स्थाने प्रयुज्यते ।

आह—( आह ) ब्रूते ब्रवीति वा √ब्रू + लट्, प्रथ० एक० 'अह' इत्यस्मात् श्रौताद्धातोरिदमिति पाश्चात्यविपश्चितः ।

आहरि—(आहार्षीत्)आ + √हृ + लुङ्, प्रथ० एक० । आहरम् ।

आहरिंसु–(आहार्षिषुः) आ + √हृ + लुङ्, प्रथ० बहु० आनीतवन्तः, आनैषिषुः ।

आहरित्वा–(आहृत्य)आ + √हृ + त्वा । उदाहृत्य, स्पष्टमभिधाय ।

आहु—( आहुः, ब्रुयते ) ब्रूधातोः संस्कृतवत् 'आह' इत्यादेशः । ब्रू + लट्, प्रथ० बहु० भूतार्थेऽपि प्रयुज्यते ।

[ इ ]

इङ्घ–(अङ्ग) आमन्त्रणप्रेरणाऽनुमत्याद्यर्थकोऽपममव्ययः । चोदने इङ्घ हन्दाथ' इत्यभिधानप्पदीपिका ।

इच्छि—( ऐषीत् )√इष + लुङ्, प्रथ० एक० इच्छति स्म ।

इत्थिकुत्तहावभावविलासेहि–(स्त्रीकृतहावभावविलासैः) प्रमदाजनाऽभ्यस्तश्रृंगारचेष्टितैः ।

इत्तरदस्सनेन–(इत्वरदर्शनेन)क्षणिकदर्शनेन ।

इद्धिमा–(ऋद्धिमान्) दिव्यसिद्धिसमृद्धसम्पन्नः ।

इस्सरो—(ईश्वरः) स्वामी, प्रभुः। 'इस्सरो सिवसामिसु' इत्यभिधानप्पदीपिका।

[ उ ]

उक्कण्ठितो-(उत्कण्ठितः) दुःखितः, कामवासनापीडितः।

उक्कमापेहि—(उत्क्रमय) उद् + √क्रम + लोट् + णिच, मध्य० एक० परावर्तय।

उक्कारभूमियं-(उत्कारभूमौ) उत्कारो विष्ठा तस्य भूमौ। अशुचिस्थाने।

उक्कारो—(उत्कारः) विष्ठा 'उच्चारो मीळ्हमुक्कारो' इत्यभिधानप्पदीपिका

उट्ठासि-(उदस्थात्) उद् + √स्था + लङ् प्रथ० एक० उदतिष्ठत्, उत्थितः।

उत्तारिंसु (उदतारिषुः) उद + √तृ + लङ्, प्रथ० बहु०। उत्तीर्णाः।

उद्दो= उद्रः) जलजन्तुविशेषः ऊद-बिलाव' इति प्रसिद्धः।

उद्धनं—(उद्धनं, उद्धानं, उध्मानम्) चुल्ली। 'अथोद्धनं च चुल्लीत्थि' इत्यभिधानप्पदीपिका। अश्मन्त-मुद्धानमधिश्रयणी चुल्लिरन्तिका' इत्यमरः।

उद्धनन्तरेसु—( उद्धनान्तरेषु ) उद्धनं चुल्ली तदन्तरेषु चुल्ल्यामित्यर्थः।

उद्धुमायि—(उदध्मायि) उद् + √ध्मा + लुङ्, प्र० एक० उच्छूनः।

उन्नदिंसु—(उदनादिषुः) उद् + √नद + लुङ्, प्रथ० बहु० महारावमराविषु

उपकूळितो-(उपकूडितः) अवदग्धः, दग्धप्रायः इत्यर्थः।

उपासको-(उपासकः) गृहस्थो बौद्धः।

उपोसथकम्मं-(उपवसथकर्म) श्रमण-धर्मानुकूलमुपवासाचरणम्।

उपोसथो-(उपवसथः) 'उद्देसे पातिमोक्खस्स पण्णत्तियं उपोसथो। उपवासे च अट्ठङ्गे उपोसथदिने सिया' इत्यभिधानप्पदीपिका।

उपोसथिका—( उपवसथिकः ) उपवसथकर्मनिरतः पुरुषः।

उप्पत्ति-( उदपतत् ) उद् + √पत + लुङ् प्रथ० एक० उत्पतितः, उदपतत्।

उब्भता-( उद्भृताः ) उद् + √भृ + क्त, जलाद् बहिरुद्धृताः।

[ ए ]

एकको-( एककः ), एकः, एकाकी, द्वितीयसङ्गरहितः, असहायः।

एकच्चो-( एकतरः, एकत्र, एकत्य, एकत्व ) एकाकी, अन्यतरः, कश्चित्।

'अथेकाकी च एकच्चा' इत्यभिधानप्पदीपिका ।

एकवाचियं —(एकवाचिकम्) एकस्य वाचिकं वचनम् । व्यक्तिगतं मतमित्यर्थः ।

[ ओ ]

ओड्डेत्वा–(अवधाय,उद्धाय,अवदाय उद्दाय) सद्—अव + धा दा + ल्यप् । प्रसार्थ, न्यस्य ।

ओतप्पं—( आपत्रप्यं, औतप्यम् ) लज्जाभावः, उत्तापः ।

ओतरि— अवातरीत्) अव + √तॄ + लुङ्, प्रथ० एक० । अवतीर्णः, अतावरत् ।

ओपरज्जं —(औपराज्यम्) उपराजस्य राजप्रतिनिधिरूपशासकस्य भावः, औपराज्यं महाराजाज्ञानुवर्तिशासकत्वम् ।

ओरतो—( अवरतः ) वक्तुः सम्मुखे तद्विपरीतपदं तु 'परतः' ।

ओरिम – अवरशब्दार्थो देशी 'ओर' शब्दः । तस्मादय ओरिम शब्दः ओरिमतीरतः अस्मात् नदीतटादित्यर्थः ।

ओवदसि—(अववदसि) उपदिशसि ।

ओवादो—( अववादः ) उपदेशः, अनुशासनम् । 'ओवादो चानुसिट्ठित्थि पुमवज्जेऽनुसासनं' इत्यभिधानप्पदीपिका ।

ओसीदापेस्सन्ति–(अवसादयिष्यन्ति) निमज्जयिष्यन्ति ।

ओसीदापेसि–(अवासीषदत्) अव + √सद + लुङ् + णिच्, प्रथ० एक० ।

ओहीनके-(अवहीनकान्) अव + √हा + क्त + क । अवशिष्टान्, तत्र त्यक्तान् ।

[ क ]

कतञ्ञुता–(कृतज्ञता) कृतस्य प्रत्युपकारेण सम्भावनम् ।

कतपरक्कमेन–(कृतपराक्रमेण) विहितप्रयत्नेन, गृहीतायासेन ।

कथेसि—( अचकथत् ) √कथ + लुङ्, प्रथ० एक० । अवदत् ।

कप्पको—(कल्पकः) नापितः । 'कप्पको तु नहापितो' इत्यभिधानप्पदीपिका ।

कप्पो, कप्पिको–(कल्पः, कल्पिकः) कल्पः, युगः 'कप्पो काले युगे लेसे पञ्ञत्ति परमायुसु' इत्यभिधानप्पदीपिका ।

कप्पेन्तो—( कल्पयन् ) √क्लृप + शतृ, प्रथ० एक० उच्छिन्दन् ।

कप्पेसि--(अचिक्लिपत्)√क्लृप + लुङ + णिच्, प्रथ० एक०।

कसटफलानि--( कष्टफलानि ) विरसानि फलानि।

कस्सपो--( काश्यपः ) कश्यपगोत्रोत्पन्नः, गोतमतनोः पुर्वतनाभिधा बोधिसत्त्वस्य।

कहापण--(कार्षापण) सुवर्णादिमानविशेषः, मुद्राविशेषः। 'करिसापणो' इत्यपि रूपं दृश्यते।

काकसीसो--( काकशीर्षः ) वायसमस्तकानुकारिशिराः।

कारणघरं--(कारणागृहम्) 'कारणा तु च यातना' इत्यभिधानप्पदीपिका। समासे ह्रस्वत्वम्। कारागृहम्।

कालकण्णिसकुनो-(कालकर्णिशकुनः) दुःशकुनसूचकः पक्षी।

कालपाषाणकूटवण्णो-( कालपाषाणकूटवर्णः) कृष्णाचलशिखराकारः।

कुमारकीळं--(कुमारक्रीडाम्) राजकुमारोचितां विषयोपभोगरूपां क्रीडां केलिम्।

कुरंगमिगो-(कुरङ्गमृगः) हरिणजातिविशेषः'मिगो पसुकुरुङ्ग च' इत्यभिधानप्पदीपिका। जातिविशेषद्योतनेन नात्रार्थपुनरुक्तिः।

कूटट्टकारका-(कूटार्थकारकाः) कपटपक्षोत्थापकाः,अलीकार्थोपन्यासदक्षाः।

कूपको-( कूपकः ) कूपस्तम्भः कूपको तु च कुम्भके' इत्यभिधानप्पदीपिका।

कोट्ठासो-( देशीशब्दः ) भागः अंशः

कोसियो-(कौशिकः) उलूकः। 'उलूकिन्देसु कोसियो' इत्यभिधानप्पदीपिका।

( ख )

खरा--( खरा ) तीव्रा।

खादापेस्सामि-( खादयिष्यामि )√खाद + लृट्, णिच्, उ० एक०

खादिसु--( अखादिषुः )√खाद + लुङ् प्रथ० बहु० अभक्षयन्।

खानुको, खाणुको-(स्थाणुकः, शाखादिरहितो वृक्षः।

खायमानं--( ख्यायमानम् )√ख्या + शानच्। भान्तं, दृश्यमानम्।

खारिभारो-(खारी + भारः) खाराति परिमाणविशेषः भिक्षोरुपकरणनिकरः।

( ग )

गंगानिवत्तने = ( गङ्गा + निवर्तने ) गङ्ग प्रवाहपरिवर्तनस्थले।

गण्हितुं--( ग्रहीतुं )√ग्रह + तुमुन्

गुम्बे—( गुल्मे ) स्तम्बः । 'अथ गुम्बो च थम्भस्सि' इत्यभिधानप्पदीपिका ।

गोचरपसुतो-(गोचरप्रसितः) गोचर + प्र + √सी + क्त । आहारान्वेषणनिरतः ।

गोचरो— गोचरः ) गोचारणस्थानं, आखेटकः, पशुग्रहणं, आहारः ।

( घ )

घातयिंसु-( अजीघनन्, न्त )√हन + लुङ् + णिच्, प्रथ० बहु० घातयन्ति स्म ।

घातेय्यं—( घातयेयम् ) √ हन + विधिलिङ् + णिच्, उत्त० एक० जीवितविरहितं कुर्याम् ।

घोसेसि—( अघोषात् ) घुष + लुङ् प्रथ० एक० अघोषयत् ।

( च )

चम्मवरत्तं—( चर्मवरत्राम् ) चर्म निर्मितां पाद्यपट्टिकाम् ।

चम्मसाटको-( चर्मशाटकः ) परिहितकृत्तिः 'दुस्स चोलो च साटको इत्यभिधानप्पदीपिका ।

चिण्णट्ठाने—( चीर्णस्थाने ) चिरपरिचितप्रदेशे ।

चितपेक्खुणं—( चित्रप्रेङ्खनं, चित्रपिञ्ज–पिञ्छं । चित्रपक्षम् ) बहुवर्णपिञ्छं, शोभनगतिकम् ।

चीवरड्ढवका-(चीवरवर्द्धकः) चीवरो महदुपकरणः श्रमणानाम् । तस्य वर्द्धकश्छेदकः । श्रमणधर्मविरुद्धाचार इत्यर्थः ।

चीवरो—(चीवरः) काषायः । 'अरहद्धजो च काषाय कासावानि च चीवरे' इत्यभिधानप्पदीपिका ।

( छ )

छड्डापेसि-(अच्छिच्छृदत्)√छृद + लुङ् + णिच्, प्रथ० एक० अपातयत्, अत्याजयत् ।

छड्डेतब्बभावो- ( छर्दितव्यभावः ) √छृद + तव्य + भावः । कोर्यविरहोत्था परित्याज्यावस्था ।

( ज )

जम्मो – (जाल्मः', पामरः, असमीक्ष्यकारी, 'जालमस्तु पामरे । असमीक्ष्यकारिणि च' इति हैमः ।

जहापेसुं—( अजीहपन् ) √ हा + लुङ् + णिच्, प्रथ० बहु० अत्याजयन् ।

जातिसम्भवो-(जातिसम्भवः) जन्मग्रहणम्, संसारावस्थितिः ।

जातिस्सरो-( जातिस्मरः ) पूर्वजन्मानुस्मरणसम्पन्नः।

जुतिन्धरा-(द्युतिधराः) कान्तिपूर्णाः। समस्तपदयोर्मध्येऽनुनासिकागमः पालिप्रभृतिषु प्राकृतभाषासु दरीदृश्यते।

जेतवन-( जैत्रवनं ) प्रसेनजितपुत्रात् जैत्रात् क्रीत्वा अनाथपिण्डकेन बुद्धाय समर्पितं श्रावस्तीसमीपस्थं विहारोद्यानम्।

( झ )

झापेत्वा-'झा' दाहे इति देशी धातुः। ततो 'झापेति' इति णिजन्तरूपम्। ततः क्त्वा। दाहं कृत्वा, दग्ध्वा।

( ञ )

ञाति—( ज्ञातिः ) बन्धवः। 'बन्धवो बन्धु सजनो सगोत्तो ञाति ञातको' इत्यभिधानप्पदीपिका।

ञातीहनुञ्ञातो—(ज्ञातिभिरनुज्ञातः) बन्धुभिरनुमतः।

( ठ )

ठपेसि—(अतिष्ठिपत् )√स्था+लुङ्' प्रथ० एक०, अस्थापयत्।

( त )

ततियसावनाय-( तृतीयश्रावणायां ) तृतीयां घोषणायामवसितायाम्।

तत्तकपाली-( तप्तकपालः ) तप्तकर्परः 'स्यात् कर्परः कपालोऽस्त्री' इत्यमरः।

तिक्खत्तुं-( त्रिकृत्वः ) त्रिवारं, वारत्रयं त्रिरावृत्य।

तित्थिये-( तैर्थिकान् ) अन्यधर्मावलम्बिनः। बौद्धेतरमतानुयायीनः।

तुम्हाकं-(युष्माकम्) युष्मदः षष्ठीबहुवचने रूपम्। चतुर्थ्यर्थेऽपि प्रयुज्यते।

( थ )

थामसम्पन्नो-( स्थाम+सम्पन्नः ) बलयुक्तः।

( द )

ददेय्य-( दद्याम् )√दा+विधिलङ् उत्त० एक०। यच्छेयम्।

दधिवारको- दधिवारकः दधिपात्रं दधिकलसः।

दसबला-( दशबलः ) बुद्धः। 'बुद्धो दसबलं सत्था' इत्यभिधानप्पदीपिका।

दहरो-( दहरः ) युवा। 'दहरो च युवा सुसु' इत्यभिधानप्पदीपिका।

दिट्ठो-(दिष्टः) शत्रुः, द्वेष्टा 'विद्देसी च दिसो दिट्ठो' इत्यभिधानप्पदीपिका।

दिसाकाका-( दिशाकाकः ) दिशापरिज्ञानाय पोतेषु परिपालितो

वायसः ।

दिसापामोक्खो—( दिशाप्रामुख्यः दिशाप्रामुखः ) दिशासु प्रामुख्यं यस्य, प्रमुख एव प्रामुखः स वा सर्वासु दिक्षु प्रसिद्धः ।

दीपिनो—( द्वीपिनः ) व्याघ्रस्य । 'सद्दुलो दीपिनीरितो' इत्यभिधानप्पदीपिका ।

दुब्बचो—( दुर्वचाः ) दुष्टवाक्, प्रतिनिविष्टचित्तः, यथेच्छाचारी ।

दुमग्गम्हा—( द्रुमाग्रात् ) वृक्षशाखाग्रभागात् ।

दुस्सं—बहुविवादास्पदमस्य पदस्य व्याख्यानम् । जातकत्थवण्णनाकारो 'दुस्स' इति पठित्वा 'अमुस्स' इति पर्यायं ददाति । 'दुस्स' इति पाठो वरीयानिति मत्वा दूषणीयमिति तदर्थं तदन्ये वहवो मन्यन्ते ।

दूसयि—( अदूदुषत् ) √ दुष + लुङ + णिच् प्रथ. एक. अनाशयदित्यर्थः ।

देवसंखलिकाय—( देवश्रृङ्खलिकया ) मायामय्या बन्धनरज्ज्वा ।

देसनं—( देशनं ) उपदेशः ।

दोमनस्सप्पत्तो—( दौर्मनस्यप्राप्तः ) विषण्णः ।

दोहळो—(दोहदः) गर्भिण्या अभिलाषः

द्विन्नं— द्वाभ्यां, द्वयोः ) द्विशब्दस्य षष्ठ्यन्तं रूपम् । चतुर्थ्यभावात् पालिभाषायां तदर्थेऽपि प्रयुज्यते ।

( ध )

धम्मराजा—( धर्मराजः ) न्यायपरायणो नृपः । सत्यनिष्ठः । भगवतो बुद्धस्य विशेषणपदम् । 'नवहि लोकुत्तरनम्मेहि परिसं रञ्जेतीति धम्मराजा' इति जातकत्थवण्णना ।

धम्मो—(धर्मराजः) 'धम्मो सभावे परियत्ति पञ्ञा ञायेसुसच्चप्पकतीसु पुञ्ञे । ञय्ये गुणाचारसमाधिसू-पि निस्सत्ततापत्तिसु कारणादो' इत्यभिधानप्पदीपिका ।

धातु—'सेम्हादो रसरत्तादो महाभूते पभादिके । धातु द्वीस्वट्ठि चक्खादि मवादी गैरिकादिसु' इत्यभिधानप्पदीपिका ।

धीतरं—( दुहितरं ) पुत्रीम् ।

( न )

नयिसु—( अनैषिषुः ) √ नी + लुङ, प्रथ० वहु० अनयन् नीतवन्तः ।

नासिस्स—( यनशिष्यत्, अनंक्ष्यत ) √ नश + लृङ, प्रथ० एक० नष्टोऽभविष्यत ।

निकति—(निकृतिः) कैतव, शाठ्य 'थियं निकति कूटं च दंभो सव्यं च केतवं' इत्यभिधानप्पदीपिकाः ।

निकतिप्पञ्ञो—(निकृतिप्रज्ञः) निकृतिर्वञ्चना शाठ्यं वा तत्र प्रज्ञा बुद्धिः प्रवृत्तिर्यस्य स कपटपटुः, शाठ्यनिष्ठ ।

निक्खन्तकालतो—(निष्क्रान्तकालतः) निष्क्रमणसमयादारभ्य ।

निक्खमि—(निरक्र क्रामीत्) निर् + √क्रम + लुङ्, प्रथ० एक० । निष्क्रान्तः निरगच्छत् ।

निपज्जापेत्वा—(निपाद्य) नि + √पद + णिच् + क्त्वा शायवित्वा ।

निपज्जि—(न्यपादि) नि + √पद + लुङ्, प्रथ० एक० ।

निब्बत्ति—(न्यवृतत्) नि + √वृत् + लुङ्, प्रथ० एक० । पुनः प्रादुर्भूय पुनर्जन्माऽऽददे ।

निब्बत्तित्वा—(निर्वर्त्य) नि + √वृत् + ल्यप् । पुनरागत्य, जनुरादायेत्यर्थः ।

निय्यादेत्वा—(निर्यात्य) निर + √यत् + णिच् + ल्यप् । प्रतिग्राह्य, प्रत्येप्य, आवयोस्तत्याः अवेक्षणभारं न्यस्येत्यर्थः ।

निय्यामकसुत्तं—(निर्यामकसूत्रं) पोतवाहकानां नौविद्या, नाविकागमः

निय्यामको<br>नियामको } निर्यामक नियामक पीतवाहः,नौपरिचालनाधिकृतः पुरुषः । 'नियामकोपोतवाहे' इत्यभिधानप्पदीपिका

निसिन्नकाले—(निषण्ण + काले) उपवेशनसमये ।

निसीदि—(न्यसदत्) नि + √सद् + लुङ्, प्रथ एक० । निषण्णः, न्यसीदत्, निषेदिवान् ।

निस्साय—(निश्रित्य) आश्रित्य ।

नीहरि—(न्यहार्षीत्) नि + √हृ + लुङ्, प्रथ० ए० । निरहरत्, निहृतवान् ।

(प)

पकतिसमुद्दपिट्ठे—(प्रकृतिसमुद्रपृष्ठे) वास्तविकपारावारवारीणमुपरि । प्रत्यक्षजलराशौ ।

पक्कमिंसु (प्राक्रमिषुः) प्र + √क्रम + लुङ्, प्रथ० बहु० । प्राद्रवन् ।

पक्कामि—(प्रकामीत्) प्र √क्रम + लुङ्, प्रथ० एक० प्राचलत् ।

पक्कोसापेसि (प्राचुक्रुशत् त) प्र + √क्रुश + लुङ् + णिच् प्रथ० एक० आकारयत् ।

पक्कोसि-(प्राक्रुशत्) प्र + √क्रुश + लुङ् + णिच्. प्रथ॰एक॰। आहूतवान्

पक्खन्दिसु-(प्रास्कन्दिषुः) प्र + √स्कन्द + लुङ्, प्रथ॰बहु॰। उदगच्छन्, निरीयुः।

पक्खिपि-(प्राक्षैप्सीत् प्र + √क्षिप लुङ् प्रथ॰ एक॰। प्राक्षिपत्

पग्घरन्तेन-(प्रघरता) प्र + √घृ + शतृ, तृ॰ ए॰। प्रस्रवता, प्रक्षरता।

पचापेतुं- (पाचयितुम्) √पच + णिच + तुमुन्। पक्वं कर्तुम्। अग्निसिद्धं विधातुम्।

पच्चामित्तो-(प्रत्यमित्र) शत्रुः। 'पच्चामित्तो विपक्खो च' इत्यभिधानप्पदीपिका।

पच्चसकाले--(प्रत्यूषकाले) प्रभातसमये।

पच्चूसो- (प्रत्यूषः, प्रत्यूषं, प्रत्यूसस्) प्रभातम् 'प्रभातं च विभातं च पच्चूसो कल्लमप्यथ' इत्यभिधानप्पदीपिका।

पच्छावामनकवातुको(पश्चाद्वामनकवातुकः, पृष्ठभागे कुरूपोपपन्नः। पृष्ठपादाभ्यां खञ्जः।

पच्छिज्जि-[प्राच्छित्त] प्र + √छिद + ङ्ङ्, प्रथ॰ एक॰। प्राच्छिद्यत, विछिन्न।

पज्झायन्तो-[प्रध्यायन्] प्र + √ध्यै शतृ प्र॰ एक॰। विचारयन्, चिन्ताकुलः।

पञ्चङ्गुलिं [पञ्चाङ्गुलिकम्] पञ्चभिरङ्गुलीभिः कृतं चिह्नम्।

पञ्ञा--(प्रज्ञा) बुद्धिः।

पञ्ञापारमि[प्रज्ञापारमिताम्] सम्पूर्णज्ञानसिद्धिम्। दशगुणा हि पारमिता, तत्र प्रज्ञा तदन्यतमा।

पटिच्छादेत्वा-(प्रतिच्छाद्य) प्रति + √ + छद् + णिच् + ल्यप्। प्रावृत्य

पटिसन्थारो-(प्रतिसंस्तारः) आलापः, सम्भाषणम्।

पटिसन्धि-(प्रतिसन्धिम्) पुनर्जन्म।

पटिसुणित्वा-(प्रतिश्रुत्य) प्रतिज्ञाय, स्वीकृत्य।

पटिजग्गि-[प्रत्यग्रहीत्] प्रति + √ग्रह लुङ्, प्रथ॰ एक॰। प्रतिगृहीतवान्, स्वीकृतवान्।

पटिच्छापेत्वा-[प्रत्येष्य] प्रति + √इष + णिच् + क्त्वा। प्रतिग्राह्य, तस्यां तयो रक्षाभारं न्यस्येत्यर्थः।

पटमकप्पिकतो--[प्रथमकल्पकतः] आदियुगादारभ्य।

पण्डुकम्बलसिलासनं (पाण्डुकम्बल शिलासनम्) पाण्डुकम्बलो नाम प्रस्तरविशेषः। तेनैव निर्मितं शक्रस्यासनमिति बौद्धकथाकाराः। 'परावण्णो गजो पण्डुकम्बलो तु सिलासनं' इत्यभिधानप्पदीपिका।

पतनाकारप्पत्ता—(पतनाकारप्राप्ताः) वस्त्राकर्तनायासेन शिथिलितबन्धनत्वात् पतनोन्मुखा जाताः।

पतिट्ठा-(प्रतिष्ठा) आश्रयः स्थानम्। 'पतिट्ठा निस्सये ठाने' इत्यभिधानप्पदीपिका।

पतिट्ठापेत्वा—(प्रतिष्ठाप्य) प्रति + √स्था + णिच् + ल्यप्। स्थापयित्वा, निधायेत्यर्थः।

पतिट्ठापेसि (प्रातिष्ठिपत् प्र + √स्था + लुङ्, + णिच्, प्रथ० एक०। प्रत्यस्थापयत्।

पत्ति (प्राप्तिः) लाभः।

पदरानि—(प्रदराणि) फलकानि। 'फलको फलके भङ्गे पवुद्धदरियम्पि च' इत्यभिधानप्पदीपिका। फलकार्थे तु नपुंसकमेव दृश्यते।

पमेतं, पणेत, पणीतं—(प्रणीतम्) प्र + √नी + क्त। कृतम्।

पप्पोठेत्वा—(प्रस्फोट्य) प्र + √स्फुट + ल्यप्। विधूय।

पव्वतरसो—(पर्वतरसः) पर्वतः शैलस्तद्रसो द्रवः, शैलेयद्रवः।

पमङ्करो—(प्रभाकरः) तेजोमयः, सूर्यः। भगवतो बुद्धस्य विशेषणपदम्। 'सत्तलोकसङ्खारलोकेसु आलोकस्य कतत्ता' इति जातकत्थवण्णना।

परक्कमो—(पराक्रमः) व्यायामः, आयासः, प्रयत्नः 'वायामो च परक्कमो' इत्यभिधानप्पदीपिका।

परिक्खादानं—(परिष्कारदानम्) चीवरादि भिक्षुजनापेक्षितं वस्तु परिष्कारस्तस्या दानम्।

परिक्खारो—(परिष्कारः) परिवारः संभारः, उपकरण, विभूषणम्। 'परिवारे परिक्खारो सभारे च विभूसने' इत्यभिधानप्पदीपिका।

परिगण्हि—(पर्यग्रहीत्) परि√ग्रह + लुङ्, प्रथ० एक०। पर्यगृह्णात्, आलिङ्गत्।

परित्तं—(प्ररिक्तम्) प्र + √रिच + क्त, अल्पकम्। 'परित्तो तीसु अप्पके' इत्यभिधानप्पदीपिका।

परिनिब्बायि—(परिन्यवासीत्) परि + नि + √वा + लुङ्, प्रथ०

एक० । निर्वाणं प्राप्नोत् ।

परिसक्कनं–(परिश्रकनं) 'चक्रमपंणे' इत्यस्मात् धातोरिदं रूपम् । प्रयतनं, उद्योगः ।

परिहायि—(पर्यहायि) परि + √हा लुङ्, कर्मणि प्रथ० एक० । पर्यहीयत, परिक्षीणः, नष्टः ।

परिहारः—त्यागः, मोक्षः 'वज्जने परिहरो च सक्कारे चेव रक्खने ।' इत्यभिधानप्पदीपिका ।

पलायि—( पलायिष्ट ) परा + √अय लुङ्, प्रथ० एक० । पलायितः, अद्रवत् ।

पल्लकेन-(पर्यङ्केन) पद्मासनमास्थाय

पसिव्वको:—( प्रसेवकः, प्रसीव्यकः ) चिन्त्यैवास्य निरुक्तिः । 'कक्कुमस्तु प्रसेवकः' इत्यमरोक्तदिशा प्रसेवकस्तु वीणाया दारुभाण्डम् । तदाकारो रज्ज्वादिभी रचितोऽवलम्बकः । 'झोला' 'गैला' 'सिखहरा'दि रूपः

पस्सेयासि—( पश्येः ) √दृश + विधिलिङ्, मध्य० एक० । अवलीकयेः ।

पहरि—( प्राहरीत् ) प्र + √हृ + लुङ्, प्रथ० एक० । प्राहरत्, प्रहारं कृतवान् ।

पहटो—(प्रहतः) प्र + √हन + क्त । प्रहारं प्राप्तः ।

पाचीनलोकधातुतो-(प्राचीनलोकधातुतः पूर्वदिशामूलतः ।

पाणका—( प्राणकाः ) प्राणः, कीटाः 'कीटो तु पुळवो किमि पाणको' इत्यभिधानप्पदीपिका ।

पाणातिपातः–(प्राणातिपातः) प्राणोत्क्रमणम्, प्राणपरित्यागः ।

पानियतित्थे—(पानीयतीर्थे) जलावतारे । 'गुरुपायावतारेसु तित्थं' इत्यभिधानप्पदीपिका ।

पापुणि—( प्रापम् ) प्र + √आप + लुङ्, उत्त० एक० । अलभे, अविन्दम् ।

पापुणिसु—(प्रापन्) प्र + √आप + लुङ्, प्रथ० बहु० । प्राप्नुवन्, प्राप्तवन्तः ।

पाविसि—( प्राविक्षत् ) प्र + √विश + लुङ्, प्रथ० एक० । प्राविशत्, प्रविष्टः ।

पायासि—(पायासीत्) प्र + √या + लुङ्, प्रथ० एक० ।

पायिसु—(प्रायासिषुः) प्र + √या + लुङ्, प्रथ० बहु० । प्रयाताः ।

पारुपित्वा–(प्रावृत्य ) प्र + आ + √

वृ + क्त्वा । छादयित्वा ।

पिलिन्धापेत्वा—(पिनह्य) अपि + √ नह + ल्यप् ।
पिलन्धो = पिनद्धः,
पिलन्धति = पिनद्धयति ।

पासादिको—( प्रासादिकः ) दयालुः, मधुरस्वभावः, मनोज्ञः ।

पिट्ठिपासाणो—( पृष्ठपाषाणः ) महाप्रस्तरशिखरः ।

पियीयिंसु—(प्यधायिषातां, प्यधायिषत वा ) अपि + √धा + लुङ्, कर्मणि, प्रथ० बहु० । न्यमील्येतां न्यमील्यन्त वा ।

पियमातुलको-(प्रियमातुलकः) प्रियो मातुलो यस्य सः । स्वार्थे कप्रत्ययः ।

पियायमाना—प्रियायमाना ) प्रीतिभावं प्रदर्शयन्ती ।

पुग्गलो—( पुद्गलः ) जीवः 'पाणो सरीरि भूतं वा सत्तो देही च पुग्गलो । जीवो पाणि पजा जन्तु जनो लोको तथागतो' इत्यभिधानप्पदीपिका ।

पुच्छिसु-- अप्राक्षुः) √पृष + लुङ् प्रथ० बहु० । पृच्छामकार्षुः, अनुयुक्तवन्तः ।

पुरेद्वारेण–पुराद्वारेण पुरस्थितेनद्वारेण

पूरयित्थ-(अपुपूरत) √ पूर + लुङ्, प्रथ०, एक० । पूरिता, पूर्यते स्म ।

पेक्खुणानि—(प्रेङ्खणानि) पिञ्जानि, (पिच्छानि) गतयः, पिच्छभारः ।

पेसेसि--(प्रैषिषत्) प्र + √ इष + लुङ् + णिच्, प्रथ० एक० प्रेषितवान्, प्राहिणोत् ।

( फ )

फालेत्वा--( फल + णिच् + क्त्वा ) भङ्क्त्वा, त्रोटयित्वा ।

( ब )

बज्झेत्वा—बद्धो भूत्वा ।
बज्झेति = बद्धयते

बद्धरावं--बद्धस्य पाशगृहीतस्य रावं परिदेवनं, जालावरुद्धचेष्टस्य क्रन्दनमित्यर्थः ।

बद्धिसु--( अभान्त्सिषुः ) √बध + लुङ्, प्रथ० बहु० । बद्धवन्तः अबध्नन् ।

बलाहस्स-(बलाहाश्वः) बलाहो मेघस्तद्वदश्वो,आकाशोड्डयनसमर्थो घोटकः ।

बावेरु--बावेरु नाम राष्ट्रम् । 'बैबिलन' इति केचित् ।

बोधिसत्तो--( बोधिसत्त्वः ), बोधिः सम्यग् ज्ञानं, तदवाप्तये निर्दिष्ट चरः, भविष्यद्बुद्धः ।

बोन्दि--शरीरम्, 'सरीरं वपु गत्तं चात्तभावो बोन्दि विग्गहो' इत्यभिधानप्पदीपिका।

वद्धपरिसा (बुद्धपरिषत्) बौद्धसमाजः तथोक्तमभिधानप्पदीपिकायाम्— 'चतस्सो परिसा भिक्खु भिक्खुनी च उपासका। उपासिका यो ति इमाथवाट्ठपरिसासियुं। तावतिंस द्विजक्खत्तमारगहपतिस्स च। समणानं वसा चातुम्महाराजिकब्रह्मुनं।

ब्रम्हचरिय--( ब्रह्मचर्यम् ) मैथुनाऽरतिः। ब्रह्मत्तारियं अप्पमञ्ञासु सासने मेथुनाऽरतियं वेय्यावच्चे सदारतुट्ठिथं' इत्यभिधानप्पदीपिका।

( भ )

भत्तं-( भक्तम् , ओदनः। 'ओदनो वा कुरं भत्तं' इत्यभिधानप्पदीपिका।

भत्तकिच्चावसाने-(भक्तकृत्यावसाने) भोजनकर्मणोऽनन्तरम्।

भरिया--( भार्या ) जाया।

भारुरट्ठं--( भरुराष्ट्रम् ) 'भडोचे'ति संप्रति प्रसिद्धगुर्जरदेशे नगरम्।

भविस्स – (अभविष्यत्)√भू + लृङ् प्रथ० एक०।

भवेय्य--( भवेत् )√ भू + लिङ्, प्रथ० एक०।

भस्सि—(अभ्रशत्)√भ्रंश + लुङ्, प्रथ० एक०। न्यपतत्, प्राविशत्।

भावितभावनाय--(भावितभावनया) भाविता वर्द्धिता सिद्धा भावना ध्यानं तथा। सिद्धावबालशक्त्या।

भिज्जिस्साम-(भेत्स्यामहे)√भिद् + लृट् ( कर्मणि ), उत्त० बहु०। विनाशं प्राप्ता भविष्यामः।

( म )

मङ्गलहत्थी-( मङ्गलहस्ती) राजकीयो गजः। दशविधानां गजानामन्यतमो वा। तदुक्तम्--

कालाळक गगेय्या पण्डर तम्बा च सिंगलो गन्धो। मङ्गल हेमोपोसथ छद्दन्ता गजकुलानि एतानि॥

मञ्जुभाणिनो- मञ्जुभाणिनः) मञ्जु +√भण + इति। मधुरस्वरस्य।

मतकभत्त-( मृतकभक्तं ) मृतकस्यार्थं यत् तन्मृत्युतिथौ दीयते तत्। भक्तमितिभोजनीयवस्तुनि प्रयुक्तम्।

मन्तयिंसु (अमन्त्रयन्त)√ मन्त्र + लुङ्, प्रथ० बहु०। व्यचारयन्, परस्परविचारविनिमयं चक्रुः।

मरि-( अमृत )√मृ + लुङ्, प्रथ०

लभामसे—( लभेमहि ) √लभ + लट्, उत्त० बहु०, एकवचनार्थे बहुवचनम् लभे इत्यर्थः।

लभि—( अलभे ) √लभ + लुङ्, प्रथ० एक०। अविन्दम्।

लुद्दको—( लुब्धकः ) व्याधः। 'लुब्ध आकांक्षिणी व्याधे' इति हैमः।

लुद्दानि—( रुद्राणि ) रुद्रकर्माणि, नृशंसकार्याणि।

लोकसन्निवासो—( लोकसन्निवासः ) जनसमूहः।

लोहितमक्खितं—( लोहितम्रक्षितम् ) लोहितं रुधिरं तेन म्रक्षितं संयुक्तम् शोणिताप्लुतम्।

( व )

वञ्चेसिं—(अवाववञ्चे अव + √वञ्च + लुङ्, उत्त० एक०।

वण्णेन-( वर्णेन ) रूपेण, संस्थानेन। 'वण्णो सण्ठानरूपेसु, इत्यभिधानप्पदीपिका।

वण्णेसि—( अववर्णत्-त )√वर्ण + लुङ्, प्रथ० एक०।

वदेय्युं—( वदेयुः )√वद + विधिलिङ्, प्रथ० बहु०, कथयेयुः।

वद्धमयं-( वध्र्रमयम् ) चर्मनिर्मितम्।

वयप्पत्ता—( वयः प्राप्तः ) अधिगतवयाः, उपागतविवाहावस्थः।

वरत्ता-( वरत्रा ) पट्टिका 'वरत्ता वद्धिका नन्धि' इत्यभिधानप्पदीपिका।

वलञ्जो-(अवलञ्जो) चिन्त्यनिरुक्तिकमिदं पदम्। चिह्नं, उपयोगः दैनिको व्ययः।

वसि-( अवात्सीत् )√वस + लुङ्, प्रथ० एक०। अवसत्।

वसिसु—( अवात्सिषुः )√वस + लुङ् प्रथ० बहु०, अवसन्।

वस्सापेस्सामि—( वर्षयिष्यामि )√वृष + लट् + णिच् उत्त० एक०। वर्षणं कारयिष्यामि।

वास्सित्वा ( वाशित्वा ) 'वाश' शब्दे इत्यस्मात् रूपमिदम्। √वाश + क्त्वा। शब्द कृत्वा।

वहिद्धासमुट्ठानं—( बहिःसमुत्थाना ) बाह्योद्भवा।

वारको—( वारकः ) पात्रम्, कलसः। 'कुम्भो कलसवारका' इत्यभिधानप्पदीपिका।

वारेसि ( आवारीत् )√वृ + लुङ् + प्रथ० एक० अवृणोत्। वृतवती।

वाळिसिको-( वाडिशकः ) मत्स्यग्राहोः मत्स्योपजीवी।

विकालो—( विकालः ) अपराह्णं, सा

याह'' विपरीतकालः ।
विचरेसि—( व्यचारीत् ) वि + √ चर + लुङ् + णिच्, प्रथ० एक० । व्यचारयत्, व्यरचत्, अरचत् ।
वित्तिण्णा—( विस्तीर्णा दूरप्रसारित-वारिविस्तारा ।
विनिच्छिनिंसु—( विनिरचैषिषुः, विनिरचेषिषत ) वि + √ निर् + चि + लुङ्, प्रथ० बहु० विनिश्चयं कृतवन्तः, न्यायनिर्णयं व्यदधुः ।
विनिच्छयो—( विनिश्चयः ) व्यवहार-निर्णयः, न्यायालयः, सत्यस-परिग्रहः ।
विनासप्पच्चयो—( विनाशप्रत्ययः ) संहारकारणम् ।
विप्पनट्ठाय—( विप्रनष्टया ) विप्र + √ नश + क्त । प्रकान्तया चलितया । 'पक्कन्ताय' इतिजातकत्थवण्णना ।
विसज्जेसि—( व्यत्याक्षीत् ) वि + √ सृज + लुङ्, प्रथ० एक० । अत्यजत्, असृजत् ।
वीमंसामि—( विमृशामि ) परीक्षे । एतदधिकृत्य विवदन्ते विपश्चितः । 'विमीमांसे' इत्यस्मादिति केचित् । मन्यतेः मनधातोरिदमिति पालि-वैयाकरणाः । विमृशामीत्यस्मादिद-मिति ट्रेङ्कनर-प्रभृतयः पाश्चात्त्य-पण्डिताः ।
व्याममत्तानि—( व्याममात्राणि ) अति-दीर्घानि । 'व्यामो सहकरा बाहुद्वे-पस्स द्वयं वित्थता' इत्यभिधान-प्पदीपिका ।
वेमज्झे—( विमध्ये ) नदिया वेमज्झे नदीतटादविदूरे इत्यर्थः ।
वेहासंगमो ( विहायोगमः ) आकाश-वर्त्मना संचरितुं समर्थः ।
वोहारकरणत्थाय—( व्यवहारकरणार्थाय ) किमपि कार्यं सम्पादयितुमित्यर्थः ।
वोहारो ( व्यवहारः ) वाणिज्यं, 'वोहारो सद्द पण्णत्ति वणिज्जा चेतनासु च' इत्यभिधानप्पदीपिका ।

## ( स )

संवच्छरमत्थके—( संवत्सरमस्तके ) वर्षादूर्ध्वमित्यर्थः ।
सक्खि—( अशकत् ) √ शक + लुङ्, प्रथ० एक० ।
सक्खिस्साम—( शक्ष्यामः ) √ शक + लृट्, उ० बहु० ।
सचे—चेत् 'स' पूर्वत्व पालिवैशिष्ट्यम् ।
सच्चकिरिया—( सत्यक्रिया ) आत्मनः शीलं प्रतिष्ठाय गृहीतः शपथः ।
सच्चूपसंहितं—( सत्योपसंहितम् ) सत्य-

पूर्णम्, यथार्थम् यथाभूताम्।

सञ्ञी—( संज्ञी ) संज्ञाबोधः, विश्वास इति यावत, तद्युक्तः।

सणिकं = शनकैः, शनैः।

सतपत्तो—( शतपत्रः ) पक्षिविशेषः 'कटफोड़वा' इति ख्यातः। 'सतपत्तो खगन्तरे' इत्यभिधानप्पदीपिका।

सत्ति—( शक्तिः ) छुरिका, कुन्तः। छुरिका 'सत्यसिपुत्ति' इति 'सत्यादि सत्थभेदाथ' इति चाभिदानप्पदीपिका।

सत्था—( शास्ता ) बुद्धः। 'मुनीन्द्रः श्रीघनः शास्ता' इत्यमरः।

सद्दहित्वा--श्रद्धाय।

सन्तिकं—( अन्तिकं ) समीपम्। साधिकत्वं पालिवैशिष्ट्यम्।

सन्निपतिंसु–(संन्यपतन्) सं + नि + √पत + लुङ् प्रथ० बहु। एकत्र समवेता अभूवन्।

सन्निपातापेसि ( सन्यपीपतत्-त ) सं + नि + √पत + लुङ् + णच्, प्रथ० एक०। समागमयत्, आहूतवान्, आकारयत्।

सपजापतिको-(सप्रजापतिकः) सभार्यः, 'पजापति दारे ब्रह्मे मारे सुरे पुमे' इत्यभिधानप्पदीपिका।

सब्बसेता—( सर्वश्वेतः ) सर्वावयवेषु सितवर्णः वर्णान्तरातन्तरितनितिम्नोपलक्षितः।

सन्थवो—( संस्तवः ) परिचयः। 'सन्थवो तु परिचयो' इत्यभिधानप्पदीपिका।

सन्निपति-(संन्यपतत्) सं + नि + √पत + लुङ्, प्रथ० एक०। समागमत्।

समणधम्मो--( श्रमणधर्मः ) श्रमणो बौद्धभिक्षुः। तेन पालनीयो धर्म आचारः, भिक्षुजतोचिताचारः।

समणो—( श्रमणः ) तापसः, भिक्षुः 'तपस्सी भिक्खु समणो' इत्यभिधानप्पदीपिका।

समस्सासेत्वा-(समाश्वास्य) सं० + आ + √श्वस् + णिच् + ल्यप्। सम्बोधनं विधाय।

समोधानेसि-( समवादीधपत् ) सं + √धा + णिच्, प्रथ० एक०। समाधानं व्यधात्!

सम्पटिच्छित्वा—( संप्रतिष्य ) सं + प्रति + √इष + क्त्वा। स्वीकृत्य

सम्मासम्बुद्धा--( सम्यक्सम्बुद्धः ) पूर्णज्ञानोपपन्नः इदं शाक्यमुनेः विशेषणपदम्।

सम्मुखचिण्णेन--( सम्मुखचीर्णेन )

सम्मुखं समक्षं कृतेन गुणेनेति शेषः ।

सरणानि–(शरणानि) बुद्धो धर्मः सङ्घश्चेति त्रयाणां शरणानि ।

सरसम्पन्नो—(स्वरसम्पन्नः) 'मधुरस्वरयुक्तः ब्रह्मस्सरेन समन्नागतो' इति जातकत्थवण्णना ।

ससलक्खनं–( शशलक्षणम् ) शशाकारं शतदशकम् ।

सहस्सं-- सहास्रं, सहस्रं ) साश्रु, शतदशकम् ।

सावना –( श्रावणा ) घोषणा ।

सावेन्तस्स—( श्रावयतः ) श्रावणां कुर्वतः ।

सावेसि–(अशुश्रवत-त) अश्रावयत् ।

सीलानिसंसो–(शिलानिशंसः) 'आनिशंसः प्रशंसनम् ।' शीलस्य सदाचारस्य प्रशंसा ।

सुंसुमारो–(शिशुमारः) नक्रः, मकरः ।

सुत्तं—( सूत्रम् ) 'सुत्तं पवचने सिद्धे तन्ते तं सुपिने तिसु' इत्यभिधानप्पदीपिका ।

सुसिरस्क्खेन–( सुषिरवृक्षेण ) छिद्रपूर्णेन शाखिना । 'सच्छिद्रे सुसिरं तिसु' इत्यभिधानप्पदीपिका ।

सोतापन्नो—( स्रोतापन्नः ) स्रोतस् + आपन्नः । प्रविष्टबौद्धधर्मः । अयं प्रथमावस्थः, द्वितीयः 'सकदागामि' तृतीया 'अनागामी', चतुर्थो 'अरहत्'

सोत्थिभावो–( स्वस्तिभावः ) कल्याणं, श्रेयः ।

सोब्भो–(श्वभ्रः ) आवटः, गर्तः

सोभग्गप्पत्तो – ( सौभाग्य + प्राप्तः ) लब्धसौख्यः, उपचितशरीरसौष्ठवः ।

सोमनस्सजातो —( सौमनस्यजातः ) प्रसन्नतां गतः ।

( ह )

हिरोतप्पं —(ह्यापत्रप्यं, ह्यौपतप्यम् ) लज्जाभावम्, लज्जोपतापः ।

इति पालिपाठपदोच्चयः ।